# भाष्यकृतोभूमिका ।

---

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्क महीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणानान्तु व्याख्यानं सम्प्रवर्त्तते ॥ ५ ॥
अष्टौ हि ब्राह्मणा ग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत् ॥ ६ ॥
आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरिताः ॥ ७ ॥
तत्राद्या ब्राह्मणग्रन्थाश्चत्वारो व्याकृताः पुरा ।
देवताध्यायसंज्ञस्तु ग्रन्थो व्याक्रियतेऽधुना ॥ ८ ॥
साम्नां निधनभेदेन देवताध्ययनादयम् ।
ग्रन्थोऽपि नामतोऽन्वर्थो देवताध्याय उच्यते ॥ ९ ॥
तत्राद्ये बहुधा साम्नां देवताः प्रीतिकीर्त्तिनाम् ।
द्वितीये छन्दसां वर्णास्तेषामेव च देवताः ॥ १० ॥
तृतीये तन्निरुक्तिश्चेत्येवं खण्डार्थसंग्रहः ॥ ११ ॥

# दैवतब्राह्मणम् ।

हरि ओम् ।

तत्रादौ साम्नां निधनभेदेन देवताभिधानाय ता एवानुक्रमते—

१ । अग्निरिन्द्रः प्रजापतिः सोमोवरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी ।

एता सामदेवताः इति शेषः

तत्रादावग्निदेवत्यानि सामान्याह—

२ । इडानिधनानि पदनिधनानीकारणिधनानीत्याग्नेयानीति ।

निधन नाम पञ्चभक्तिकस्य सप्तभक्तिकस्य साम्नोऽन्त्या भागः । सर्वत्र सामतश्चतुर्विधं स्वरोनिधन मिडावागिति । स एवान्तर्णिधनं बहिर्णिधनमिति द्वेधा । तत्र निधना दिवितयव्यतिरिक्तस्य स्वर इति रूढ्या नामधेयम् । इडा निधनानीति—कालेयरौरवादीनि । वाद्याक्षरनैरपेक्षेण ऋगन्त्यपदान्येव यत्र निधनस्थानीयानि तानि पदनिधनानि यौधाजय सफ्त्वितादीनि । ईकारनिधनानि वैरा जादीनि । उक्तत्रिविधनिधनानि यानि सामानि तान्याग्नेयानि अग्निदेवताकानि ।

अथैन्द्रदैवत्यान्याह—

३। सर्वाणि निधनवन्त्यैन्द्राण्यन्यान्यादिष्टेभ्यः।

आदिष्टेभ्य. इडानिधनादिभ्य. वक्ष्यमाणेभ्यो व्यतिरिक्तानि यानि निधनवन्ति सन्ति तानि सर्वाण्यैन्द्राणीति जानीयात्।

अथ प्राजापतिदैवताकान्याह—

४। सर्वाणि स्वराणि प्राजापत्यानि—

स्वर्यमाणम् उक्तलक्षण ऋगन्त्याक्षर हाइ कारय स्वरनिधन वदन्ति प्राजापत्यानीति।

साम स्वयमेवोदाहरति—

५। यथा वामदेव्यम्।

एतच्चाधिकारयुक्तस्योदाहरणम्।

अथ सौमदैवत्यान्याह—

६। ऋक्सामानि सौमानि—

यानि ऋगक्षराणि स्तोभादिरहितानि केवलतानमात्रयुक्तानि तान्येव ऋक्सामानि।

स्वयमेव तान्युदाहरति—

७। यथौशनकावे।

अथ वरुणदैवत्यान्याह—

८। बाहुनिधनानि वारुणानि—

वाङ्निधनवन्ति वाङ्निधनानि ।

उक्तलक्षणं साम उदाहरति—

९ । यथा यज्ञायज्ञीयम् ।

अथ त्वष्टृदेवत्यान्याह—

१० । अक्षरानुस्वाराणि त्वाष्ट्राणि—

अक्षरमनुस्वर्य्यते येषु तानि तथोक्तानि ।

तान्युदाहरति—

११ । यथा वारावन्तीयन्त्वाभिवर्त्तश्च ।

अथाङ्गिरोदेवतानां लक्षणमाह—

१२ । स्वःपृष्ठान्याङ्गिरसानि ।

अभिसोमास आयव इत्यादिषु गातव्यानि स्वःपृष्ठानि आङ्गिरसानि ।

अथ पूषदेवत्यानां लक्षणमाह—

१३ । स्वर्णिधनानि पौषाणि ।

काशीतदैवोदासप्रभृतीनि स्वर्णिधनानि ।

अथ सरस्वतीदेवतान्याह—

१४ । कयानश्चित्र आभुवदापवस्वसहस्रिणमिति वाङ्निधने सारस्वते ।

यद्यपि वाङ्निधनानि वारुणानीति पूर्वमेवोक्तं तथाप्य नयोरुत्पन्ने एव वाङ्निधने सारस्वते, अतएव दयव्यतिरिक्तानां वारुणत्वादस्यापुनरुक्तिः ।

अथैन्द्राग्नलक्षणमाह—

**१५। य आनयत्परावत इत्यैन्द्राग्ने।**

य आनयदित्यत्र द्वे सामनी उत्पन्ने, ते इन्द्राग्नीदैवत्ये।

अथाग्नेयैन्द्रयोः सामनी आह—

**१६। सुतं रयिष्ठाः सहोरयिष्ठा इत्याग्नेयैन्द्रे।**

उपनीहरिभिः सुतमित्यस्यान्ते 'सुतꣳरयिष्ठाः'—इत्येतद्गीयते, तथा 'सहोरयिष्ठा'—इत्येतदपि। ते उभे आग्नेयैन्द्रे एव।

निधनभेदेन सर्वेषां साम्नां सामान्येनाग्न्यादीन्द्राग्निपर्यन्ता दश देवता द्रष्टव्या। आग्नेयैन्द्रयोरनिर्देशेऽप्यैन्द्राग्नस्यैव विपर्यासादनन्यत्वम्।

अथ प्रकारान्तरेण निधनवशात् सप्तसाम्नां देवताभिधानाय ता एवानुक्रमते—

**१७। वसवो रुद्रा आदित्या विश्वे देवाः।**

यथाग्न्यादयः प्रत्येकं सामदेवता, वस्वादयोऽपि सकलसामकाः सर्वेषां साम्नां निधनचतुष्टयभेदेन देवता।

अथ निर्दिष्टक्रमेणैतासां सामानि विभज्य दर्शयति—

**१८। वसूनाꣳस्वराणि रुद्राणान्निधनवन्त्यादित्यानामैडानि विश्वेषां देवानां वाङ्निधनानि।**

स्वरनिधनादिभेदेन सामान्यभागानां चातुर्विध्यम्। स्वरादित्रितयव्यतिरिक्तस्य निधनमिति रूढ्या नामधेयमिति पूर्वमेवोक्तम्. एतेषां लक्षणानि च प्रदर्शितानि।

ननु साम्नां पूर्वमेवाग्न्यादिदेवताकत्वं व्यवस्थितम्। इतः पर मपि सर्वाण्याग्नेयादीनीत्यादिना वक्ष्यते च। किमर्थं वस्वादिदेवताकथनमिति तत्राह—

१९। यथा भूयस्त्वेन प्रदेशावर्त्तन्त इत्य-न्तराणि।

भूयसोभावो भूयस्त्वम्—सर्वत्र इत्यर्थः। तदनतिक्रम्य प्रदेशाः साम्नां वस्वाद्युपदेशा वर्त्तन्ते, अत उक्ताग्नेयाद्यपेक्षया वस्वादिदेवतान्यभ्यन्तराणि, पृथक् पृथक् देवताभिधानात् पूर्वोक्ताना वाह्यत्वम्, इदानीं सद्वयोभिधानादान्तरत्वम्॥

अथोक्तप्रकारेण देवताभिधानेऽपि निगूढतरं साम्नां देवतापरिज्ञान प्रकारमाह—

२०। अथान्तरतराणि सर्वाण्याग्नेयानि सर्वाण्यैन्द्राणि सर्वाणि प्राजापत्यानि सा-मानीत्यन्तरतराणि।

पूर्वन्तु साम्नां चतुर्द्धा विभागेन देवताचतुष्टयाभिधानमुक्तम् इह तु सर्वेषामपि साम्नामग्न्यादिदेवताकत्वकथना-दन्तरतरत्वम्॥

अथोक्तप्रकारादपि लघुतरं दैवतपरिज्ञान प्रकार-
माह—

२१। अथान्तरतमानि सर्वाणि ब्राह्मणि सामानीति सर्वान्तरतमानि।

छन्दस्सामा ब्रह्मणएवादौ सृष्टेस्तत्तद्दैवताध्यासेन तस्यैव प्रतिपाद्यत्वात्सर्वेषां ब्राह्मत्वम्।

अथ साम्रा दैवतासम्बन्धविषये ज्ञातव्य रहस्यमाह—

२२। अथोपनिषद्।

कैषोपनिषदिति दर्शयति—

२३। ऋग्वै माता साम पिता प्रजापतिः स्वरः।

ऋक् प्रसिद्धा। साम गीत्यात्मकम। स्वर क्रुष्टादि।
(१८) अस्त्वेव, किं तत ? इत्यत आह—

२४। तद्यान्यृत आख्यायन्ते मातृतस्तान्याख्यायन्ते अथ यानि सामत आख्यायन्ते पितृतस्तान्याख्यायन्ते अथ यानि स्वरत आख्यायन्ते प्रजापतितस्तान्याख्यायन्ते।

ऋक्त आख्यातानि यज्ञायज्ञीय वारवन्तीय प्रभृतीनि। देवानृगवयवभूतपदेनाख्यानात्। सामत आख्यातानि यौधाजयप्रभृतीनि। स्वरत आख्यातानि वामदेव्यादीनि। एव

समस्तस्योद्गीथस्योद्गानकर्मण ऋक्सामे स्वरो इति त्रयोऽवयवास्ते पृथक् पृथक् मात्रादिसम्बन्धेन प्रसिद्धा भवन्ति ।

अथोद्गीथस्योक्तविधत्वं प्रशंसति—

२५ । स वा एष उद्गीथो बन्धुमान् बन्धुमत्त्वः ।

बान्धवा मात्रादय स्तद्वान् । न केवलं बन्धुमत्त्वं किन्तु तेषामन्तर्भूतश्च ।

उक्तार्थज्ञानं शंसति—

२६ । बन्धुमान् बन्धुमत्यो भवति जानन्ति ह वा एनं पितृतश्च य एवं वेद ।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थे
प्रकाशे दैवताध्यायाख्ये पञ्चमे ब्राह्मणे
प्रथमः खण्डः ।

पूर्वखण्डे साम्नां बहुधा देवता उक्ताः ॥ अथ तदाश्रयभूतानां छन्दसां देवता अभिधास्यति । इदानीं तेषां वर्णानभिधातुं प्रतिजानीते—

१ । अथातश्छन्दसां वर्णाः ।

वक्ष्यन्ते इति शेषः ॥

अथ गायत्र्यादिभेदेन वर्णविशेषानाह—

२ । शुक्ला गायत्री रूपेण सारङ्गरूप-
सुष्णिहां पिशङ्गं ककुभारूपं कृष्णामनुष्टुभं

ततः। रोहितं द्वतीनां तु नीलं पाङ्क्तं ततः पुनः सुवर्णं विष्टुभारूपं गौरं जागत मुच्यते।

सारङ्ग शबल'। श्येमा सप्ता: (१)। एतेषां अक्षरसङ्ख्या तु "अथ छन्दांसि गायत्र्युष्णिगित्युपक्रम्य चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि" अनुक्रमण्या मुक्तत्वात् चतुर्विंशत्यक्षरप्रभृति चत्वारि चत्वार्यक्षराधिका उष्णिगादिषु द्रष्टव्या. (२)॥

अथातिजगतीप्रभृतीनां वर्णानाह—

३। अतो यान्यन्यानि छन्दांसि श्यावं तेषां ततः पुनः। नकुलन्त्वेकपदानां द्विपदां बभ्रुरुच्यते सारङ्गशुक्लकृष्णारूपाण्यृग्यजुःसामवाङ्मान्विताः।

अतो यान्यन्यानि गायत्र्यादिसप्तच्छन्दोभ्यो व्यतिरिक्तानि अतिजगतीप्रभृतीनि उत्कृतिपर्यन्तानि (३) तेषां श्याव कपिशवर्णं विद्यात्। 'अथेन्द्रो जुषस्वप्रवहेत्यादीक पदाना नकुल नकुलजाति वर्ण जानीयात्। द्विपदाना-मिमाशुक मित्यादीना बभ्रुवर्णम्। तथा यानि ऋग्यजुरादिब्राह्मणगतानि गायत्र्यादीनि तेषाञ्च क्रमेण सारङ्गादयो वर्णा द्रष्टव्या।

अथ यज्ञसम्बन्धिनां गायत्र्याद्युपयन्ताना, मन्त्राणां

देवता वक्ष्यामीति प्रतिजानीते—

४। यज्ञे यज्ञे मयोक्तान्यास्तेषां दैवत उच्यते ।

अथानुक्ताना विराजा वर्णं दर्शयति—

५। विराजः पृश्नयो विद्यात् ।

पिबासोममिन्द्रमन्दतुत्वे त्येवमादया विराज पृश्नि वर्णा इति जानीयात् ।

अथाग्ने र्गायत्र्यादिमन्त्रद्वयप्रवण किमर्थमित्याशङ्कते तत्तात्पर्यमाह—

६। दैवतं तत उत्तरम् ।

तत तस्मात् उत्तर वाक्यजात देवताभिधानमित्यर्थ ॥

अथाग्न्यादीना गायत्र्यादिदेवतात्वसम्बन्धपर मन्त्रद्वयम् तत्र प्रथम मन्त्रमुदाहरति—

७। अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सम्बभूव अनुष्टुभा सोमा उक्थैर्महस्वान् वृहस्पतेर्भवति वाचमाभवद् ।

अग्ने सयुग्वा सहायभूता गायत्री अभवत् । प्रजापतेर्मुखात् देवतासु मध्ये अग्निरजायत । छन्द सु मध्ये गायत्री च उभावप्य जायेतामित्यर्थ । तथाच तैत्तिरीयक प्रजापतिरकामयत प्रजायेयेति । स मुखतस्त्रिवृ निरमिमीत । तमग्निर्देवताया असृजत गायत्री छन्दस इति ॥

यदा। सयुग्वेत्य त्तरत्र सम्बध्यते। अग्नेः सकाशा-
द्गायत्री अजायत इत्यर्थः। तथा उष्णिहया उष्णिक्छ-
न्दसा सह, सयुग्वा सह युज्यमाना कक्कुप् सविता देवः
सम्बभूव तस्मात्प्रजापतेर्यज्ञे 'आपञ्चापि हलन्तानामिति'
(१०) वचनादुष्णिहशब्दादापप्रत्ययः। तथा उक्थैर्मन्त्रैः
महस्वान् तेजस्वी सोमः अनुष्टुभा अनुष्टुप् छन्दसा साहं
तस्मादेव प्रजापते रजायत। तथा बृहस्पतेर्वाच वाक्यं
बृहती छन्द अभवत् अचरत् अगच्छदा। बृहत्या साहं
बृहस्पतिरपि तस्मात्प्रजापतेर्यज्ञे ऽजायतेत्यर्थः॥

अथ द्वितीय मन्त्रमुदाहरति—

८। विराण्मित्रावरुणयोरभियो रिन्द्रस्य त्रिष्टुवेह भागो अह्नः। विश्वान् देवाञ्जगत्या विवेश तेन चाक्लृप्तऋषयो मनुष्याः।

अपि च मित्रावरुणयो र्देवयोर्विराट् छन्दः अभिश्रीः प्रशस्यया आसीत्। अथ इन्द्रस्य त्रिष्टुप् छन्द अह्नो भागो माध्यन्दिनसवनाख्ययाभूत्। तथा जगतीच्छन्दः विश्वान् देवान् आ विवेश प्रविष्टा। तेन अग्न्यादिदेवताकेन गा-यत्र्यादिच्छन्द उपनिबद्धेन ऋषयो मनुष्या मरणशीला मानवाश्च चाक्लृप्ताः चक्लृपिरे क्लृप्ताः सृष्टा आसन्नित्यर्थः। अतो गायत्र्या अग्न्यादिदेवताकेन गायत्र्यादि छन्द इत्युक्तं भवति॥

अथोपरितनानां छन्दसां देवतामाह—

९। प्राजापत्या अतिच्छन्दसो विच्छन्दसो वायुर्देवताः। पुरुषो द्विपदानां दैवतं ब्राह्म एकपदाः स्मृताः।

अतिच्छन्दसः अतिजगत्यतिशक्कर्यादयोऽतिपूर्वाः; विच्छन्दसः शक्कर्यादिघृतय। यद्वा। सर्वा एता अतिच्छन्दसः। विच्छन्दसो गायत्र्यादय एवैकद्व्यक्षरन्यूनाधिकभूताः। ताश्च क्रमेण प्रजापतिवायुदेवताकाः; द्विपदा एकपदाश्च यथाभिधानसमये दर्शिताःताश्च क्रमेण पुरुष-ब्रह्म-देवताका.

अथ अनिर्दिष्टायाः पङ्क्तेर्देवतामाह—

१०। यासवी पङ्क्तिः।

यासवी वसुदेवताका॥

अथ छन्दसामुक्तदेवताकत्वे प्रमाणमुपन्यस्यति—

११। स तु न मन्येतैतद्देवत्या एवैतेषु छन्दस्तृचो भवन्तीति छन्दसां तु हैतद्देवतमिति।

तु शब्दः अवधार्यार्थः; स पुरुष न मन्येत, छन्दसामुक्तदेवताकत्वे प्रमाणं नाप्नोति न शङ्केत। यथा एतेषु गायत्र्यादिच्छन्दःसु एतद्दैवत्या एव अग्न्यादिदेवताका एव ऋच. प्रायेण सम्भवन्ति तथा छन्दसां (उ.ष्णष्टोऽप्यर्थे) अग्न्यादिदेवताक ऋगायत्र्यादीनामपि। छन्दसामेतद्दैवतं इ एता अग्न्यादिदेवता भवितु युक्ताः खल्वित्यर्थः।

इति श्रीदेवताध्यायाख्ये प्रथमे ब्राह्मणे द्वितीयः खण्डः॥

अथ सामोपयोगिनां छन्दसां कथनप्रसङ्गेन तेषामेव निर्व्वचनं दिदर्शयिषुः सूत्रं प्रतिजानीते—

## १ । अथातो निर्व्वचनम् ।

अथ साम्नां देवताभिधानानन्तरम् अतः यतो निर्व्वचनेन निरुक्तं गायत्र्यादि छन्दो गायत्रं साम जागतं सामेति सामनामसूपयुज्यते अतो निर्व्वचनं प्रकृति प्रत्यय विभागेन व्युत्पादनं प्रदर्श्यत इति शेषः ॥

तत्र गायत्रीं दर्शयति—

## २ । गायत्री गायतेः स्तुतिकर्म्मणः ।

गै शब्दे, शब्दं स्तवनं, गायति स्तौति, प्रकाशयति देवतानिति गायत्री ॥

अथ ब्राह्मणप्रदर्शनेनैव प्रकारान्तरेण निर्व्वचनं दर्शयति—

## ३ । गायतो मुखादुदपतदिति ह ब्राह्मणम्

'गायतः वेदजातं शब्दयतः' प्रजापतेर्मुखात् एषा वेदसारभूता उदपतत् उदगच्छत् तस्मात् अतोऽपि गायत्रीत्यर्थः ॥ अत्रैव 'गायत्री'विद्यायां प्रकारान्तरेण निरुक्तो गायत्रीशब्दः । 'गायन्तं त्रायते पालयति च सा गायत्री । या वै खलु गायति च—'हया संसारे मा क्लिश्यत, तदुच्छित्तये मामेव भजध्वमिति' स्वयं शब्दयति च । , तथा कुर्व्वाणं दुःखात्मकात् संसारात् त्रायते पालयति च सा गायत्रीति निरुच्यत इति शेषः ॥ 'तद्यद्गायत्रस्तत्त्रैस्तस्माद्गायत्री नामेति'

दि इहदारण्यक तथाच श्रातिनिर्वचनमपि। 'गायत्र गायते स्तुतिकर्मणः' ... 'गायत्रीं प्रशस्यायती वेन सा गायत्रीति'।—

अथोष्णिहो निर्वचनं बहुप्रकारं दर्शयति—

४। उष्णिगुत्स्नानात्, स्निह्यतेर्वा का-न्तिकर्मणोऽपि वोष्णीषिणीवेत्यौपमिकम्।

उत्पूर्वात् 'ष्णा शौचे (अ॰ प॰)—इत्यस्मात् उष्णिक् शब्दः। तदेवाह—उत्स्नानात्—उदभूतस्नानवत्वादुष्णिग् वा। यद्वा। स्निह्यतेः 'ष्णिह प्रीतौ (दि॰ प॰)' इति धातु ततःयत् प्रीत्यात्मकं तत् कान्तमपि भवतीति कृत्वा कान्ति कर्मत्वम्। स्निह्यते काम्यते इत्युष्णिगित्यर्थः—कान्त इति देवतानां छन्दः। अपि वोष्णीषी उष्णीषवत्येवेत्यौपमिकम्—उपमाप्रयुक्तमभिधानमपेक्ष्योष्णिक् शब्द तथा हि या गायत्रीतयस्तुभिं रक्षैर्वेष्टितेव वर्तते। चतुरक्षराधिक्यादु ष्णिकप्रभेदस्य।

अथ ककुभो निर्वचनमाह—

५ ककुप् ककुद्रूपिणीत्यौपमिकम्।

ककुप्शब्दोऽप्युपमाप्रधानः—यथाहृषभस्य मध्यप्रदेशे ककुत् सञ्ज्ञकं उच्छ्रितो भवति। एवं मध्यमपादस्य ज्ञागत त्वात् चतुरक्षर ककुत्स्थानीयमस्यास्तीति ककुप् दकारस्य पकारः। ककुदस्यायं स्यात् लोपः,—इत्यस्यादसमासेऽ प्यकारलोपः।

ककुभशब्दस्य काकुभं दक्षाधायनमित्यादौ प्रयोगोऽस्य-

अरणात् स्वाभिमतमर्थमाह—

६। ककुप् च कुब्जस्य कुजतेर्वोब्जतेर्वा।

ककुप् कुब्जशब्दौ कुजतेरुब्जतेर्वोत्पन्नौ। कुज कौटिल्य प्रतिष्ठाविलेखनेषु। उब्ज आर्जवे—अत्र न्यग्भावार्थं। ततः कौटिल्यन्यग्भावार्थक धातुद्वयार्थस्यात्र सम्भवात् ककुप् शब्द'।

अथानुष्टुभो निर्वचनमाह—

७। अनुष्टुबनुस्तोभनात्।

स्तोभतिः शब्दार्थः। गायत्रीतस्त्यसमासरपादहद्दे।

उक्तार्थं ब्राह्मणसम्मतिं दर्शयति—

८। अन्वस्तौदिति हि ब्राह्मणम्।

निरुक्ते प्रकारान्तरेण ब्राह्मणवाक्यमुदाहृतम्। 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्'—इति।

अथ, पिपीलिकामध्यानिर्वचन यत्, पिपीलिका शब्दस्य निर्वचनमाह—

९। पिपीलिका पेलतेर्गतिकर्मणः।

न द्वासौ वचनमुदाहृते।

इदानीं तच्छन्दोनिर्वचन दर्शयति—

१०। पिपीलिकामध्येत्यौपमिकम्।

पिपीलिका नाम वर्मयत स्थूलो मध्ये कृश इव

ाखिविशेषः तन्मध्यमिव मध्यं यस्याः सा तथोक्ता। मध्यम-
ादलोपी समासः। तस्यास्तनूमध्यत्वमनुक्रम्य "एकाद्शिनोः
रः षट्कस्तुत्रिरा, मध्ये चेत् पिपीलिकामध्येत्युक्तम्।

अथ बृहत्या निर्वचनमाह—

११। बृहती बृंहतेर्वृद्धिकर्मणः।

अस्या अनुष्टुभः सर्वपादे चैकैकाक्षरवर्द्धनात् गेवृद्धत्वम्।

अथ विराजो निर्वचनं बहुप्रकारमाह—

१२। विराड्विरमणाद्विराजनाद्वा।

विराट् शब्दः "रमु क्रीड़ायां"—"राजृ दीप्तौ"—"राध साध संसिद्धौ"—इति त्रिभ्यो धातुभ्योऽन्यतरेणापि निष्पाद्यते। धातुत्रयार्थस्य तस्मिन् सम्भवात्॥

अथ निर्वचनमाह—

१३। पङ्क्तिः पञ्चिनी पञ्चपदा।

पञ्चसंख्यायोगात् पिङ्क्तिशब्दः। पञ्चत्वप्रदर्शन पञ्च पदेति॥

अथ त्रिष्टुभोनिर्वचनं दर्शयति—

१४। त्रिष्टुप् स्तोभ इत्युत्तरपदा।

स्तोभ इति स्तुतिकर्मोत्तरपदं यस्याः सा त्रिष्टुप्, अस्मात्तरपदं पूर्वपदस्य—त्रिशब्दस्य।

किं महत्तिनिमित्तमिति स्वयमेव पृष्टोत्तरमपि ब्रूते—

१५। का तु लिता. सांत्तोर्णतमं छन्दो भवति।

अस्य त्रिता त्रित्वं वा स्यादिति प्रश्नः। अस्योत्तरम्—तीर्णतमं छन्दोभवतीति। पूर्वस्यौ मध्यस्थात् त्रयांशः सकारो लुप्तः। तीर्णतमं तरतेर्वा पूर्वपदम्। उभयार्थोपपत्तिस्तरणात् स्तोभनाच्चेति त्रैष्टुभत्वम्।

त्रिष्टुप्छन्दः पूर्वपदमित्याह—

१६। त्रिष्टबनुस्तस्य स्तोभमिवेत्यौपमिकम्।

उभयस्त्रिकमोटित्वात् वज्रवित्रत्। तस्य स्तोभमिवेत्यु पमाप्रधानोऽयं निर्देशः। "यत्रिवृत्ता स्तोभं त्रिष्टुभस्त्रिष्टुबमिति ब्राह्मणम्।

अथ जगतीच्छन्दं निर्वक्ति—

१७। जगती गततमं छन्दोजजगतिमंवति क्षिप्र गतिर्जगल्गाकुर्वन्नसृजतेति हि ब्राह्मणम्।

अतिजगत्यादीति छन्दसां निर्वक्तुमुपक्रमते—

१८। अतिच्छन्दांम्छन्देरथ।

छन्दसीऽर्थे आनिनेयातिच्छन्दसोऽपि आनं सुलभमिति भावः। तथाच जगतीमतिक्रम्याधिकाक्षरत्वेन या वर्तते सैवातिजगतीत्येवं कल्पितम्। अथेदानीं छन्दस एव निर्वचनं वक्ति—

१९। छन्दांसि छन्दयतीति वा।

'छन्दसंवरणे (चु० उ०)' छदयति वर्णान्। तथाच

नैरुक्तम्—छन्दांसि छदनात् (दै॰ १, १) इति ॥

तत्र गायत्र्यादिषु यथानियम-चतुर्विंशत्याद्यक्षराभावे तासां नामान्तरता माह—

२०। निचृन्निपूर्वस्य चृतेः।

एकाक्षरन्यूनासु गायत्र्यादिषु निचृदिति। चर्चयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः. निकृष्ट मेकाक्षरेण हीनं निचृत्। तथाच पिङ्गलः—"ऊनाधिकेनैकेन निचृद्भुरिजौ (३ ५८) इति।

तथा एकाक्षराधिक्ये सञ्ज्ञान्तरमाह।

२१। भरणाद् भूरिज उच्यते।

एकाक्षरेण भरणाद् चतुर्विंशत्यात्मगायत्र्यादाविति शेष'। अथो सामसु गायत्रस्य प्रशस्ततया तद्देवत्योपसंहारे स्तौति

२२। अथातोगायत्रमाग्नेयं भक्त्या भवति देवानां वर्षीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम।

अथेत्यानन्तर्यवचन: अत इत्यधिकारार्थः। आग्नेयम् अग्निदैवतम्, यद् गायत्रं नाम साम, तद्धि देवाना वा ऋषीणां वा परमेष्ठिनः प्राजापत्यस्य वा सर्वस्येवेत्यर्थः 'भक्त्या' सम्भजनेन भवति भवेत्॥

गायत्र-साम्नः किं मूल मित्याह—

२३। सावित्री गेयम्।

सावित्रि नामर्चितत्सवितुर्वरेण्यमित्यत्रैव गेयम् प्रश
स्तमे तदत्र अन्यत्रापि गेयमूहतः

ननु गानग्रन्थेषु कथं तत्रोपलभ्यतइत्याह—।

२४। यत्रागीतम्।

यत्र सावित्रिनामर्चि गानग्रन्थादौ प्रगीतम् तत्रैव
गानम् प्रशस्तमित्यर्थः।

किन्तदिति स्वरूपं दर्शयति—

२५। तत्सवितुर्वरेणियोम्। भार्गोदेवस्य
धीमा ह्यौ२। धियोयोनः प्र। चो १ ऽ २ १ ऽ
२ ऊम्। आ२ हायो आ ३ ४ ५।

सावित्रगान्यर्कस्त्वदपस्य उत्तरार्चिकस्य षष्ठप्रपाठकीय-
तृतीयार्द्धे श्रुतस्य दशमसूक्तस्य प्रथमपाठतो ज्ञेय,। व्याख्या-
तत्रापि तत्रैवेति॥

॥ इति तृतीयः खण्ड॥

॥ समाप्तश्चदैवत ब्राह्मणम्॥

# षड्विंशब्राह्मणम् ।

ओं नमः सामवेदाय ।

ओं ब्रह्म ह वा इदमग्रे सुब्रह्म आसीत् तत, सुब्रह्मो-
ऽस्मादयह देवा यज्ञेन ब्रह्म पर्यगृह्णताग्निर्वै ब्रह्मा सावा-
दित्य, सुब्रह्म तद्देवा यज्ञस्य सन्धावन्वेच्छन्नेव वै यज्ञस्य
सन्धिर्यदेव चक्रुस्तस्मादुत्करे तिष्ठन् सुब्रह्मण्य सुब्रह्मण्या
माह्वयति सुब्रह्मण्यो ३ꣳ सुब्रह्मण्यो३ꣳ सुब्रह्मण्यो३ मिति
त्रिय मिव विराड् विपक्षा (त्या) हि देवा इन्द्रागच्छेति
यन्द्राद्विन्द्रागच्छेत्येतद्वा अस्य प्रत्यक्ष नाम तेनैवैनं तदा ह
यति हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी
ताभ्याꣳ हीदꣳ सर्वं हरति मेधातिथेर्मेषेति मेधातिथिꣳ ह
काण्वायनꣳ मेषो भूत्वा जहार वृषणश्वस्य मेन इति वृष
णश्वस्य ह मेनस्य मेनका नाम दुहिता स ताꣳ इन्द्रश्चकमे
गौरावस्कन्दिन्निति गौरमृगो ह स्म भूत्वावस्कन्दारण्या
द्राजानं पिबत्यहल्यायै जारेत्यहल्याया ह मैत्रेय्या जार
आस कौशिकब्राह्मणेति कौशिको ह स्मैनं ब्राह्मण उप-
ह्वयेति गौतमब्रुवाणेति देवासुरा ह संयत्ता (त्ता) आसꣳ
स्तानन्तरेण गौतम श्चचार तमिन्द्र उपेत्योवाचेह नो
भवांश्च (श्च) सञ्चरत्विति नाहमुवाह इत्यथाह भवतो
रूपेण चरामीति यथा मन्यस इति स यत्तद्गौतमो वा

ब्रुवाणश्चचार गौतमरूपेण वा तदेतदाह गौतमेतीव हि
सुत्यामागच्छ मघवन्निति तद्यथार्हतो ब्रूयादित्यर्हे व.
पक्तास्मि तदा गच्छातेत्येवमेवै तद्देवेभ्यः सुत्यां प्राह देवा
ब्राह्मण इति देवाहैव देवा अथ हैते मनुष्यदेवा ये ब्राह्मणाः
शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवा आहुतय एव देवानां द-
क्षिणा मनुष्यदेवानामाहुतिभिर्हि देवान् प्रीणाति दक्षि-
णाभिर्मनुष्यदेवाञ्छुश्रुवꣳसोऽनूचानान् ब्राह्मणान् प्रीणाति ॥१॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके

प्रथमखण्डः ।

अथ यत्र सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति तस्मिन् ह का-
लेऽसुररक्षाꣳसि देवानां यज्ञमजिघाꣳसकस्ते देवा निह्नव
म्वा कुर्वत ब्रह्मं३ꣳसुब्रह्मो३मिति तानादित्य. पर्जन्य पुरो
वलाको भूत्वाऽभि प्रैक्षन् अश्याऽगन्या विद्युताह्वꣳस्तदाह.
स्त्री सुब्रह्मण्या ३ऽऽ पुमा ३ऽऽऽनपुꣳसका ३ऽऽऽमिति सर्व-
मेवेति ब्रूयात् यत्पर्जन्य. पुरो वलाको भूत्वाऽभिप्रैक्षत्तेन
पुमान् यद्वृष्ट्या यदगन्या तेन स्त्री यद्विद्युता तेन नपुꣳ-
सक तस्मात् सर्वमेवेति ब्रूयात्तदाहु स्त्रैकम्ब्रह्मण्या३ऽऽऽ
यजूꣳः ऽऽऽऽम्सामा३ऽऽऽ इति सर्वमेवेति ब्रूया इव इवास्या
नामधेयꣳसुब्रह्मण्येति तस्मा इदमन्त्र एव खल्वय निगद
भूतो भवति तस्माद्यत्तु सामकारिण कुर्वन्ति यथान्यैः
सामभिस्तस्मात् साम तस्मात् सर्वमेवेति ब्रूयात्तदा यतत्
सुब्रह्मण्यामाह्वय यजमानं वाचयति सासि सुब्रह्मण्ये
तस्यास्ते पृथिवी पाद इत्याह यान्येव पृथिव्यामसुर
चाꣳसि तान्येव तेनापहते सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्ष

पाद इत्याह यान्येवान्तरिक्षेऽसुररक्षाएंसि तान्येव तेनाप हते सामि सुब्रह्मण्ये तस्मात् द्यौः पाद इत्याह यान्येव दिव्यसुररक्षाएंसि तान्येव तेनापहन्ति सामि सुब्रह्मण्ये तस्मात् दिशः पाद इत्याह यान्येव दिक्ष्वसुररक्षाएंसि तान्येव तेनापहन्ति परो रजास्ते पञ्चमः पाद इत्याह पराऽरजसो वै ब्रह्मणः स्थानं तदेतदाह सा न इषमूर्ज्जं धुक्ष्वेत्याहेषमेवास्मा ऊर्ज्जं दुग्धे वोर्य्यमन्नाद्य धेहीत्याह वीर्य्यमेवास्मा अन्नाद्य दधाति ब्रह्मणो वै नामैतन्नाम यत् सुब्रह्मण्या तस्मात् प्रातरनुवाक उपाकृते विसृष्टिते च यत्ते सुब्रह्मण्यः सुब्रह्मण्या माह्वयत्येष वै यज्ञ मनद्य चाप्नोति य एतदनौ युक्तं सु ब्रह्मण्याय ददाति ब्रह्मणा चैवास्य प्रिया च यज्ञं समर्द्धयति य एव वेदार्था इत्याहुर्यञ्चावगत यञ्चानवगतऽमर्व स्यैयेव प्रायश्चित्ति रिति तस्मादेव विद सुब्रह्मण्य कुर्वीत नानेवं विदम् । २ ।

इति षड्विंशब्राह्मणे प्रथम प्रपाठके

द्वितीयखण्डः ।

एकच्छन्दः प्रातःसवन तस्मा देकपात पुरुषो हरन्त्यं प्रत्यन्येन तिष्ठति त्रिच्छन्दा माध्यन्दिन पवमान स्तस्मात् त्रयोऽधः प्राणा द्वे गायत्र्याएंसामनी तस्मादयमधरेण प्राणेन करोति द्वे बृहत्यां तस्मादयमुत्तरेणैक त्रिष्टुभि साम तस्मादेकैव नाभिः प्राणानामिव तु विष्टति रथ यदेव तत जङ्ग तानि पृष्टानि बाहेतान्येकगाधलीकाणि तस्माद्वृत्य एव परिमयो ह्रुत्य एव कीकसाः पृष्ठमभिसमायन्त्यथ यदेव तत जङ्ग स आर्भवः पवमानः

प्राणो गायत्री श्रोत्रे उष्णिक्ककुभौ वागनुष्टुप्चक्षुर्जगती पृष्ठ्यैंद्स्वदे गायत्र्याए सामनी तस्मादयं प्राणैन करोति प्राणिति चापानिति चैकं छन्दः ककुबुष्णिहौ हे सामनी तस्मात् समानएसच्छ्रोत्र द्वे धेव शृणोति द्वे अनुष्टुभि सामनी तस्मादयं वाचा करोति सत्यं चानृतं च वदत्यैकं जगत्यां साम तस्मा द्वे अचिणी सती समानं पश्यतो न हि पथा द्यावन्त पश्यत्यथ यदेव तत ऊर्ध्वं मूर्धा तदायायणीयं मूर्धा खाना भवति य एव वेदाथ द्व वा अन्यान्यन्नानुपरीव मूर्धाथ द्वावात्मा अन्ये खा भवन्त्यपरीव खाना भवति य एव वेद यज्ञो वा अथ यज्ञ इत्याहुरेष वावजात एषोऽयलुप्तजरायुरेष आर्लिंजीनो य एत वेदमनुब्रूते यदा वा एत वेदमनुब्रूतेऽथैनए श्रुणवन्त्यमावन्थवोचतेति तद्दै स जायते जनाधरा गायत्री प्रातः सवने प्रजानां प्रजात्या जनादिव हि प्रजा प्रजायन्त जनाधरा गायत्री पृष्ठेषु वामदेव्ये यजमानं लोक एव स मध्ये हि यज्ञस्य यजमान जनाधरा गायत्री सहिते प्राणापानयो रुचार जनादिव हि प्राणापानावुचरत जनाधर युज्ञायज्ञीय प्राणानामुत्तरध्ये यो हि पूर्णमुपधमेद् यदि प्रतीयाद् विपतेद् यदि न प्रतीयाद् विपन्देत तदाहुः सर्वेनानाय वा एत उदाना' प्राणानाञ्चोत्सृष्टिरिति ॥ ३ ॥

इति षड्विंशब्राह्मणे प्रथमप्रपाठके तृतीयखण्डः ।

अध्वर्यो पित्वाहोतारा मास्म मे निवेद्य होत्रे प्रातरनुवाकमुपाकरो रिति सोऽन्यु प्राह स इतो व्रजति स पु

यथा द्वारा हविर्धाने प्रपद्यते स दक्षिणस्य हविर्धानस्योत्तरं चक्रमभ्यपध्यमाण उदङ्ङासीनो विश्वरूपा गायति यत्र वै स्तोत्रं विटशस्त्र यत्रैणैवाक्मै वियमनुवीर्यं मनुवर्मान करोत्यथो भुतशस्त्रयो रेव समारम्भायाऽथवस्त्रं साय सन्तत्या एतद्वस्माह ग्लावी मैत्रेयः प्राह्वेवा अयाहं पापवसीयस व्याकरिष्यामीति सह स्म सदस्येवोपवसथ्येऽह्नुदङ्ङा- सीनो विश्वरूपा गायति तदुपवादीश्चष्यर्यो किं स्तुतं स्तोत्र होता प्रातरनुवाकेनान्वशंसीदिति स ब्रूयादका- रिप मह्यन्तद् यन्मम कर्म होतारं पृच्छतेति होतः । कि स्तुत स्तोत्र प्रातरनुवाकेनान्वशसीरिति स ब्रूयादकारिय महन्तद् यमम कर्मोद्गातार पृच्छतेत्युद्गातः । किं स्तुत स्तोत्रं होता प्रातरनुवाकेनान्वशसीरिति स ब्रूयादका- रिप मह्यन्तद् यमम कर्म गासिष यद्ययमिति तं चेद्ब्रूयु- स्तमा वै त्वमगासीर्नेष्यातिरिति स ब्रूया ज्योतिस्तेन येन ज्योति ज्योतिस्तेन येनर्ग् ज्योतिस्तेन येन गायत्री ज्योतिस्तेन येन छन्दो ज्योतिस्तेन येन साम ज्योतिस्तेन येन देवता ज्योतिरेवाह मगासिषं न तमो युष्मांस्तु पाप्मना तमसा विध्यानीत्याह पाप्मनैवैनां- स्तत्तमसा विध्यति युञ्जे वाच शतपदीमित्याह वाग्वाशत- पदी त्रच् शतपदी शतसनिमेव तदात्मानश्च यजमानश्च क रोति गाये सहस्रवर्त्तनीति साम वै सहस्रवर्त्तनि सहस्रस- निमेव तदात्मानश्च यजमानश्च करोति गायत्र त्रैष्टुभ जग- दिति गायत्र वै प्रातः सवन त्रैष्टुभं माध्यन्दिन सवन जागतं तृतीयसवनं सवनान्येवैतद् यथा स्थान यथा रूप कल्पयति

विश्वारूपाणि सम्भृतेति विश्वमेव तद्वित्तमात्मने च यजमानाय च सम्भरति देवा श्रोकासि चक्रिर इत्योकोहास्मिन् यत्र कुरुते य एव वेदाथ तमगाह स्मैतं पुरा काश्यपा उद्गायन्त्ययह युवानमनूचान कुसुरुबिन्दमौद्दालकि ब्राह्मण उद्गीथाय वव्रे ते हांसु परि वै नोयमार्त्विज्यमादत्ते हन्तैममनुव्याहरामेति त हानुव्याहरिष्यन्त उपनिषेदुः स होवाच ब्राह्मणा नमोवोऽस्तु प्राह्ने वा अह यत्र समस्थापयन्त्यथा तु वै ग्रामस्य यातस्य शीर्षं वा भग्न वानुसमावहे देव वा अह यज्ञस्यातोऽधिकरिष्यामीति ते हाहित्युक्त्योत्तस्थु क इदमस्मा अवोचदिति ॥ ४ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके
चतुर्थखण्ड प्रथमाईय ।

इन्द्रो ह वै विश्वामित्रायोक्यमुवाच वसिष्ठाय ब्रह्म वा गुक्यमित्येव विश्वामित्राय मनो ब्रह्म वसिष्ठाय तहा एतद्वासिष्ठ ब्रह्मापि हैव विट वा वासिष्ठ वा ब्रह्माण कुर्वीत तद्यथो भयवर्त्तनिना रथेन या या दिश प्रार्थयते ता तामभिप्राप्नोत्येव मेतेनोभयवर्त्तनिना यज्ञेन य काम कामयते तमभ्यश्नुतेऽथार्द्धभाग्वै मन प्राणाना स यद्व्याहरति वाचि तन्मन प्रतिष्ठापयति तद्यथैकवर्त्तनिना रथेन न काञ्चन दिश व्यश्नुते ताहगेतद् यावद् ऋचा यजुषा साम्ना कुर्युस्तावद् ब्रह्मा वाच यमो बुभूषेत् प्रजापतिर्वा इमाँ स्त्रीन्वेदानसृजत स एत सृष्टानाधिन्वँस्तानभ्यपीडयत्तेभ्यो भूर्भुव स्वरित्यक्षरद् भूरित्यृग्भ्यो क्षरत् सोऽय लोकोभवद् भुवरिति यजुर्भ्यो क्षरत् सोऽन्तरि-

द्युलोको भवत् स्वरिति सामभ्योऽक्षरत् स. स्वर्गोलोको भवत्तद्यदृक्त उल्वणं क्रियेत गार्हपत्य परेत्य भू. स्वाहेति जुहुया द्य वै लोको गार्हपत्योऽय लोक ऋग्वेदस्तद्वा इमञ्च लोक ऋग्वेदञ्च स्वेन रसेन समर्द्धयत्यथ यदि यजुष्ट उल्वण क्रियेतान्वाहार्यपचन परेत्य भुवः स्वाहेति जुहुया दन्तरिक्षलोको वा अन्वाहार्य-पचनोऽन्तरिक्षलोको यजुर्वेदस्तद्वा अन्तरिक्षलोकञ्च यजुर्वेदञ्च स्वेन रसेन समर्द्धयत्यथ यदि सामत उल्वणं क्रियेता हवनीय परेत्य स्व स्वाहेति जुहुयात् स्वर्गो वै लोक आहवनीय. स्वर्गो लोक. सामवेद-स्तद्वै स्वर्ग च लोकꣳ सामवेदञ्च स्वेन रसेन समर्द्धयत्यतो यावद्यतमस्मिन्नेव कतमस्मिꣳ श्चोल्वण क्रियेत सर्वेष्वेवा-नुपर्याय जुहुयात्तथा हास्य यज्ञो स्वन्तः स्वर्गकृतो भव त्यथस्कन्ना द्वाभिवाद्वा त्रेधा यज्ञ उत्क्रामति देवान् दिवं तृतीयमन्तरिक्षं मनुष्याꣳ स्तृतीय पृथिवी पितॄꣳ स्तृतीय तदभिमृशेद् देवान् दिव यज्ञो गात्ततो मा द्रविणमष्टन्तरिक्षं मनुष्यान्यज्ञो गात्ततो मा द्रविणमष्टु पृथिवी पितॄन् यज्ञो गात्ततो मा द्रविणमष्ट् यत्र क्व च यज्ञो गात्ततो मा द्रविणमष्ट्विति तद्वा आत्मानञ्च यज-मानञ्च स्वेन रसेन समर्द्धयति वरुणो वा एतद्विष्णो यज्ञ-मुपार्पयति यद् यज्ञ उल्वण क्रियते तदप उपनिनयेद्यो वोजसा स्कभिता रजाꣳसि वीर्येभि र्वीरतमा शविष्ठाया पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणापूर्वहूतौ स्वाहेति तद्वा आत्मानञ्च यजमान च स्वेन रसेन समर्द्धयति ॥५॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके पञ्चमखण्डः ।

ये विराजमतियन्ति विराजमेव त ईप्सन्तोऽमुष्मिं लोके
श्राम्यन्त्यथ य एनामर्वाग्दभ्नुवन्ति विराजमेव त ईप्सन्तो-
ऽमुष्मिं लोके श्राम्यन्ति तेषां तया श्राम्यताꣳ सुकृतं क्षी-
यते न हि तदमुष्मिं लोके शक्नुवन्ति यदस्माल्लोकाद् दत्वा
प्रयन्त्येतद्ध स्माहोद्दालक आरुणि कथन्ते यजेरन् कथं वा
याजयेयुर्ये यज्ञस्य ह्रदेन न नन्दन्ति नन्दन्ति यत् समृद्धे-
नेत्यहं वा व काले यजे याह काले याजयेयं योऽहं यज्ञस्य
ह्रदेन नन्दामि नन्दामि यथासमृद्धेनेत्यपि ह स्मादेव का-
माद् यज्ञस्य व्यर्द्धयति भूयसे रूपाय रूपा ऽऽप्स्यामि भिष
कृत्वेत्येतद्ध स्म वै तद्विद्वानाह यावद्वा ऋचा होता क-
रोति होतर्येव तावद्यज्ञो यावद्यजुषाऽध्वर्युरध्वर्य्येव ता
वद् यावत्साम्नोद्गातोद्गातर्येव तावद् ब्रह्मण्येव तावद्यज्ञो
यज्ञोपरतास्मात्तस्मिन्नन्तर्दौ ब्रह्मा वाचयमो बुभूषेत् स
यदि प्रमत्तो व्याहरेद् होता वा व्याहृतोर्मिनमानुद्रवेद्भू-
र्भुव स्वरिति वैष्णवीं वर्चमिद विष्णुर्विचक्रम इति
राम्रो ह मितस्य मर्कटोꣳ शूनाढाय ब्रह्म माधुप्रवे स हा-
रुणि राहुतिमुपत्योवाच पुनर्वैनानिपप्रास्यतो वावमृतो
यपस्त्रस इति स होवाच किꣳ होष्यमीति प्रायश्चित्त
मिति किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति किꣳ सर्वं
प्रायश्चित्तमिति महाव्याहृती रेव मघवन्निति सहोवाचा-
मारुणि यदाहृति मनूचिषे काय नु विद्वान्कथमर्कटोꣳ
शूनादत्तेति स होवाच यथावगत यथानवगतꣳ सर्वस्मै
पैव प्रायश्चित्तिरिति तस्मा एतामेव जुहुयादपि वा ज्ञात
यदनाज्ञातं यज्ञस्य क्रियते मिष्यन्नं तदस्य कल्पयत्वꣳ

ह्वि वैश्य यथा यथए स्वाहेत्यपि वा प्राजापत्यां प्राजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तुवयए स्याम पतयो रयीणाए स्वाहेति तदा आत्मानं यजमानश्च स्वेन रसेन समर्द्धयत्यथ यदै किं च यज्ञे मृण्मयं भिद्येत तद्भिसृष्टैश्च भिर्भूर्मिमगात्माता मातरमप्यगाद्भूयाम पुत्रैः पशुभिर्योऽस्मान् द्वेष्टि स भिद्यतामिति तदा आत्मानश्च यजमानश्च स्वेन रसेन समर्द्धयति ॥ ६ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके षष्ठखण्ड ।

घ्नन्तीव वा एतत् सोमए राजानं प्रियमोयते यदेन मभिषुणवन्ति तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यं चरुन्तस्मात् पुरुषाय पुरुषायानुस्तरणी क्रियते साध्याना वै देवानाए सत्रमासीनानाए शर्करा अचसु जज्ञिरे ते हेन्द्रं मुपनिषेदु काय नु तेषाए शर्करा अचसु जायेरन् याए स्त्व विद्या इति तेभ्य एतत्सौम्यं चरीश्नावमाज्य प्राय च्छत्तद्वैचन्त ते प्रापश्यन् प्रपश्यत्यनन्धो भवति य एव विद्वांसौम्य चरुमवैचते योऽलमवाचाय सवचावचावाद् टचिणार्द्धए सदसो गवेतए सौम्यातिग्रेष प्राश्नीयाऽऽनन वा एतस्माटसाद्य क्रामति योऽलमवाचाय सवचावचास्ति जनो अस्माप्पितरो जन्ये नैवान्ये नाश्नमत्यचादो भवति ॥ ७ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके सप्तमखण्ड ।

## इति प्रथमः प्रपाठकः ।

ओम् । प्रजापति रकामयत बहु स्यां प्रजायेयेति स

एताएं रेतस्यामृचएं साम्ना प्रच्छन्नामगायद् यद्दचमसाम्नी मगास्य दस्युमाएं समजनिष्यत यत्सामामृचं माएंस मनस्विकामजनिष्यतर्च्ंएंसाम्ना प्रच्छन्नां गायति तस्मात् पुरुषः प्रच्छन्नो माएंमेन त्वचा लोम्ना जायते त्रिरुद्गृह्णाति त्रय इमे लोका एषां लोकानामवरुध्यै त्रिभ्यश्च रेतः सिच्यते न हिं कुर्याद् वज्रो वै हिङ्कारो बलमिव रेतो यद्धिङ्कुर्याद् वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्यात्त्रैतस्या छन्दसा प्राजापत्या देवतया सर्वमितया ध्यायन् गायेत् सर्वएंह्यैदएंरेतो द्वितीया गायति तस्या द्वे अक्षरे सम्वनौ व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमं व्यतिषक्तौ प्राणापानौ प्रजा दधतौ गायत्रोच्छन्दसाऽऽग्नेयी देवतया पृथिवीमितया ध्यायन् गायेत् तृतीयां गायति तां बलवदिवोग्रमेव गायति तस्या द्वे उत्तरार्द्धेऽक्षरे द्योतयति चक्षुरेव तद्दधाति तस्मादुक्तं चक्षुस्त्रिष्टुप्छन्दसैन्द्री देवतयान्तरिक्षमितया ध्यायन् गायेच्चतुर्थीं गायति तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽक्षरेभ्यो द्वादशाक्षरपदा जगती पशवो वै जगती पशुष्वेव प्रति तिष्ठति तस्याश्चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयति श्रोत्रमेव तद्दधाति तस्मादुक्तएंश्रोत्रएंश्रोत्रे द्वे प्रति श्रवणे द्वे तस्मात् पुरुषः सर्वा दिश शृणोत्यपि पराङ्सन् प्रत्यन्यएंशृणोति जगतीच्छन्दसा मौरीदेवतया दिवमितया ध्यायन् गायेत् पञ्चमीं गायति तान्निनर्दन्निव गायत्याङ्क बहुतमात् पुरुषादश्मलग्नाप्नो भवति य एवं वेद निरुक्तां चानिरुक्तां च गायति निरुक्तेन वै वाचो भुङ्क्ते निरुक्ता-

मन्त्या उपजीवन्ति भुङ्क्ते वाचमुपैनां जीवति य एवं वेदानुष्टुप्छन्दसा प्राजापत्या देवतया सर्वमेतया ध्यायन् गायेत् सर्वं ह्येद प्रजापत्यं यष्टो गायति तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः षड्ऋतव ऋतु ष्वेव प्रति तिष्ठति पङ्क्ति छन्दसा सौमोदेवतया दिश एतया ध्यायन् गायेदिहैव च वा एष इहैव च मनसा गच्छति यो गायते प्रातःसवने त्रिष्टुभङ्गायति जगतीं गायत्यनुष्टुभङ्गायति पङ्क्तिं गायत्यास्ते गायत्रं हि गायति प्राणमेव तदभ्येति प्राणो हि गायत्रं पन्यानमेव तदभ्येति पन्था हि गायत्रं रथन्तरवर्णामुत्तमां गायति यं वै रथन्तरमस्यामेव प्रति तिष्ठति॥१॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके प्रथमखण्डः।

ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः प्रतीच्यो मनुष्यलोकायैष वाव जात एषो वत्स जरायुरेव आलिंजीनो यस्य धुरो गोयन्ते यथैवं विद्वान्सो गायति जातमेवैनमन्वायाय परि हणत्युभावक्षमत्त उद्गाता च यजमानश्च या प्रथमा तामन्वायं ध्यायन् गायेद्रेतस एव तत्सिक्तायाचाय प्रतिदधाति न हि कुर्याद्यद्विद्र्याद् वमेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्या द्रेतस्याकन्दो युज्यते मनो धीयते या द्वितोया तां गायत्रीमागाङ्गायेए स्तस्या द्वे अक्षरे सगयन्तो व्यतिषजति मध्यमस्य च पद्स्योत्तममुत्तमस्य च प्रथमं व्यतिषक्तौ प्राणापानौ प्रजा दधतो गायत्रीच्छन्दो युज्यते प्राणापानौ धोयेते या तृतीया तां त्रिष्टुभमागां गायएस्तस्या द्वे उत्तमार्द्धेऽक्षरे

द्योतयति चक्षुरेव तद्युनक्ति तस्माद् विरूपश्चक्षुः कृष्ण-
मन्यच्छुक्लमन्यत् त्रिष्टुप्छन्दो युज्यते चक्षुषी धीयेते या
चतुर्थी तां जगतीमागाङ्गायथ्ँस्तस्याश्चत्वार्यक्षराणि
द्योतयति श्रोत्रमेव तद्युनक्ति तस्माद्युक्तथ्ँ श्रोत्रथ्ँ श्रोत्रे
द्वे प्रतिश्रवणे हि तस्मादपि पराङ्यन् प्रत्यङ् शृणोति
जगतीच्छन्दो युज्यते श्रोत्रे धीयेते या पञ्चमी तामनुष्टु-
भमागां गायथ्ँश्चतस्रो व्याहृत्य गायेच्चतस्रो वा इदं पुरुषो
वीर्याय विकृतो जायते वीर्यायैवैनत्तद्व्याहृत्य गायत्युच्चाव-
चामिव गायेदुच्चावचेव हि वाक् सङ्क्युत्येव गायेत् स-
ङ्क्युत्येव हि वाच पुरुषो वदत्यनुष्टुप्छन्दो युज्यते वाग्
धीयते या षष्ठी तां पङ्क्तिमागाङ्गायथ्ँस्तस्या द्वे द्वे
अक्षरे उदासङ्गायत्यापङ्भ्योऽक्षरेभ्यः षडृतव ऋतुष्वेव
प्रति तिष्ठति पङ्क्तिश्छन्दो युज्यते समानोदानौ धीयेते
सदिति प्रथमाया धुरो निधनथ्ँरेतसो ह्यधि सञ्जायते
समिति द्वितीयाया रेतसो ह्यधि सम्भव स्वरिति तृती-
याया प्रस्वर्गं लोकं जानातीडेति चतुर्थ्याः पशवो वा इडा
पशुष्वेव प्रति तिष्ठति वागिति पञ्चम्याः सर्वा अस्मिन्
पुण्या वाचो वदन्ति य एवं वेद या प्रथमा तां गाय-
च्छ्रयमिव गाये दायत इव ह्यय मवाङ्प्राणो या द्वितीया
तां घोषिणीमिव गायेद् घोषीव ह्ययमपानो या तृतीया
तामुच्छ्रयमिव गाये दुद्युत इव ह्ययं प्राणो या चतुर्थी
तां विक्रीडयन्निव गायन्विक्रीडित इव ह्यय व्यानो या पञ्चमी
तां विरक्तानि पदामिव गायेद्विरक्तानि पदा इव ह्ययथ्ँ
समानो या षष्ठी तामुदात्तमिव गाये दुदस्त इव ह्यय

मुदानो यच्छ्ण्ण्वन्ए रथन्तरवर्णामुत्तमाङ्गाये दिय वै रथन्तर मस्यामेव प्रतितिष्ठति ॥ २ ॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके द्वितीयखण्डः ।

देवाश्च वा असुराश्चेषु लोकेष्वस्पर्धन्त ते देवाः प्रजापति-मुपधावएंस्तेभ्य एतान्धुर प्राणान् प्रायच्छत्प्राण: प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाच ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुषश्च पशूएंश्च निरमिमीत तेन पुरुषेणासुरानधूर्वन् यद्-धूर्वएंस्तद्धुरां धूर्त्व धूर्वति पाप्मान भ्रातृव्यं य एव वेद यो वै धुरां धूर्त्वं वेद धुरा धुरा भ्रातृव्याद्वसीयान् भव-त्येतद्वै धुरां धूर्त्व यं नाना वीर्या नाना रूपा नाना छन्दस्या नाना देवत्याः समानए हिंकार मभि सम्पद्यन्त एतद्वै धुरा धूर्त्वं धुर्वति पाप्मानं भ्रातृव्यं य एवं वेद यो वै धूर्षु महाव्रत वेद सर्वा अस्मिन् पुण्या वाचो वदन्ति शिरो गायत्र्युरस्त्रिष्टुब्मध्यं जगती पादा अनुष्टु-प्सर्वा अस्मिन् पुण्या वाचो वदन्ति य एव वेद यो वा एव धुरो विद्वानथासां व्रत परत्वागमिष्यतोऽस्य पूर्वेद्युः पुण्या कीर्त्ति रागच्छति सुरभिरेव गन्धो गायत्र्या व्रतं दर्शनीय त्रिष्टुभः श्रवणीय जगत्या यदेव वाचा पुण्य वदति तदनुष्टुभ स्तद् सर्वासां व्रत तद् विद्वाए स माद्य रति नो वाद्री रिति तद्ग्राहृत्य यस्य वै धुरो विगीतास्तस्य स-ङ्गीता यस्य वा एता अभिष्यवमाने विगीयान्तरात्रेषु सङ्गायन्ति तस्य वै धुरो विगीता स्तस्य सङ्गीता यः कान-येतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति होतुराज्ये गायेदेकधा यजमान यश ऋच्छेद यथादिष्टं

ह्वयस्वेत्युच्चैः प्राणो मे होतागार्हपत्ये तस्मिन्स्तं मोपह्वयन्त्वां होता गार्हपत्ये उपमाह्वयध्वमित्युच्चै रश्मयो मे चमसाऽध्वर्यवस्ते मोपमाहन्तां चमसाध्वर्यव उपमाह्वयध्वमित्युच्चैस्ताना एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भवति प्राणो यजमानोऽग्नी यत्तैतासां देवतानां लोकं स्वदुपहूतो भवति ॥ ५ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके पञ्चमखण्डः।

स माध्यन्दिने सवने सवनमुखीयेष्वाहुतिपूर्ववमिच्छति वाङ्मे होता स मोपह्वयताम् होत रुपमाह्वयस्वेत्युच्चैश्चक्षुर्मेऽध्वर्युः समोपह्वयता मध्वर्य उपमाह्वयस्वेत्युच्चैः श्रोत्रं म उद्गाता समोपह्वयतामुद्गातरुपमाह्वयस्वेत्युच्चैर्योऽयमन्तश्चक्षुषाकाशः स मे सदस्यः समोपह्वयताम् सदस्योपमाह्वयस्वेत्युच्चै र्या इमा अन्तश्चक्षुषापस्ते मे होत्रागार्हपत्ये स्ते मोपह्वयताम् होत्राशंसिन उपमाह्वयध्व मित्युच्चै रङ्गानि मे चमसाऽध्वर्यव स्ते मोपह्वयन्तां चमसाध्वर्यव उपमाह्वयध्व मित्युच्चै स्ता वा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भवत्यपानो यजमानोऽग्नी यत्तैतासां देवतानां लोकं स्वदुपहूतो भवति ॥ ६ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके षष्ठखण्डः।

स तृतीयसवने सवनमुखीयेष्वाहुतिपूर्वव मिच्छति प्राणो मे होता स मोपह्वयताम् होत रुपमाह्वय स्वेत्युच्चै रपानो मेऽध्वर्युः स मोपह्वयता मध्वर्य उपमाह्वयस्वेत्युच्चै र्व्यानो मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुपमाह्वयस्वेत्युच्चैः

समानो म उद्गाता स मोपह्वयता मुद्गात रुपमाह्वयस्वेत्यर्थे यौयमन्तः पुरुष आकाशः स मे सदस्य. स मोपह्वयताए सदस्योपमाह्वयस्वेत्यथैर्या इमा अन्तः पुरुष आप स्ते मे होत्राशएसिनस्ते मोपह्वयन्ताएहोत्राशएसिन उपमाह्वयध्व मित्युथैर्लोमानि मे चमसाध्वर्यवस्तेमोपह्वयन्तां चमसाध्व र्यव उपमाह्वयध्वमित्युथेत्ता वा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपहूतो भचयत्युदानो यजमानो-ऽथो यत्रै तासां देवताना लोकस्तदुपहूतो भवति सर्वेषां वषट्कर्त्ता चमसं भचये द्देवानां वा एतद्यज्ञस्य मुखं यदु-द्गातृचमसं तस्मा दुद्गातृचमस नान्यो भच्चयेदेव विदुषो ह वै यज्ञो न व्यथत एष विदुषो ह वै यजमानस्य स्वर्ग्यं पुत्रं पशव्य मिष्ट भवत्येव विद्वान् ह वै यजमानो द्विषन्तं भ्रातृव्य मभिभवत्यथवा भर्ता यो यज्ञे हीनं कुर्यात् ॥ ७ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके सप्तमखण्डः ।

यद्धोता जहाति वाग्व तद्यजमान जहाति स यत्तत् करोति स्वां वाच यजमाने दधाति स विष्वङ् वाचा-मुष्मिँल्लोके सम्भवति यदध्वर्युर्जहाति चक्षुर्ह तद्यजमानं जहाति स यत्तत् करोति स्वचक्षुर्यजमाने दधाति स विष्वङ चक्षुषामुष्मिँल्लोके सम्भवति यद्ब्रह्मा जहाति मनो ह तद्यज-मानं जहाति स यत्तत् करोति स्वं मनो यजमाने दधाति स विष्वङ्मनसामुष्मिँल्लोके सम्भवति यदुद्गाता जहाति श्रोत्रएह तद्यजमान जहाति स यत्तत् करोति स्वएश्रोत्रं यजमाने दधाति स विष्वङ् श्रोत्रेणामुष्मिँल्लोके सम्भवति

यत्तदस्माज्जहात्यात्मा ह तद्यजमानं जहाति स यत्तत्
करोति स्वमात्मानं यजमाने दधाति स विष्वङ्ङात्मना-
मुष्मिंल्लोके सम्भवति यदीतरावृत्विजो जहत्यङ्गानि ह तद्य-
जमानं जहति ते यत्तत् कुर्वन्ति स्वान्यङ्गानि यजमाने
दधति ते विष्वञ्चोऽङ्गैरमुष्मिंल्लोके सम्भवन्ति यच्चमसाध्व-
र्यवो जहति लोमानि ह तद्यजमानं जहति ते यत्तत्-
कुर्वन्ति स्वानि लोमानि यजमाने दधति ते विष्वञ्चो लो-
मभिरमुष्मिंल्लोके सम्भवन्ति तस्मादेवं विदुषि होत्रे न
क्रुध्येद्यथा मत ऋत्विजामेव विज्ञानं यस्यो ह्याध्वर्युमनु-
कीर्त्तिर्होतारं योगक्षेमो ब्रह्माणमात्मा च प्रजा चोद्गाता-
रम् ।८॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके अष्टमखण्डः ।

स यदि पशुतो व्याधीयेताध्वर्युर्म इदमकरिति वि-
द्यादथ यद्येनं पापिका कीर्त्तिरनूदियाद्धोता म इदम-
करिति विद्यादथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इद-
मकरिति विद्यादथ यद्यात्मना वा प्रजया वा व्याधीये-
तोद्गाता म इदमकरिति विद्यात् प्राणदेवत्यो वै ब्रह्मा
वाग्देवत्या इतर ऋत्विजः स यदि मन्येत ब्रह्मा म इद-
मकरिति हरितं हिरण्यं दर्भेणावबध्य स्रुच्यवधाय
चतुर्गृहीतमाज्यं गृहीत्वा जुहुयान्नमः प्राणाय वाच-
स्पतये स्वाहेति यद्यु वा इतरे नमो वाचे प्राणपत्न्यै स्वा-
हेति यद्येतरो यदि वेतरे सर्व्वेष्वेवानुपर्य्यायं जुहुयान्नमः
प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेत्यथ
तद्धिरण्यं ब्रह्मणे दद्यादथ यदाह वशो वाव यज्ञस्य प्राय-

ष्टिस्तिरिति पुनर्यज्ञ एव स एते उ ह त्वेवाहुतो वषवि-
ष्टस्य प्रावयित्तिरिति ॥ ८ ॥

इति षड्‌विंशब्राह्मणे द्वितीय-प्रपाठके नवमखण्ड ।

ते वा ऋत्विज. स यजमानो देवा वा अन्ये ऋत्विजो
मानुषा अन्ये य देवा याजयन्ति देवलोकमेव स तै रवरु-
न्धेन मनुष्यलोक मथ य मानुषा याजयन्ति मनुष्यलोकमेव
स तै रवरुन्धेन देवलोक मथ य उभये याजयन्ति देवलोक-
ञ्चैव स तै रवरुन्धेन मनुष्यलोक ञ्च स एता देवानृत्विजो
वृणीताग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो
म उद्गाताऽऽकाशो मे सदस्य आपो मे होत्राशंसिनो
रश्मयो मे चमसाध्वर्यव स एतान् देवानृत्विजो वृत्वाथै
तान्मानुषान् वृणीत य एनमभि राधयेयु रेव ऋत्विज देव
यजन याचेत् स योऽस्मै दद्याद्देवयजनवान् भूया इत्येन
ब्रूयाद्य योऽस्मै दद्याद् यदह देवयजन वेद तस्मिं
स्त्वा हव्यानीत्येन ब्रूया दग्निर्वाव तद्देवयजन भूमिर्वाव
तद्देवयजन मापो वाव तद्देवयजनꣳ श्रद्धा वाव तद्देव
यजन मेतद्ध वा एन देवयजनमप्यश्वत्थो हातिमेवा
पोरुषेयो निल्यय तत ऋत्विजो देवयजन याचे दग्निर्मे
होता स मे देवयजन ददातु होतर्देव यजन मे देहीत्यथा
दित्यो मेऽध्वर्युः स मे देवयजन ददात्वध्वर्यो देवयजन मे
देहीत्यथ चन्द्रमा मे ब्रह्मा स मे देवयजन ददातु ब्रह्मन् देव-
यजन मे देहीत्यथ पर्जन्यो म उद्गाता स मे देवयजन
ददातूद्गातर्देवयजन मे देहीत्यथाकाशो म सदस्य स
मे देवयजनं ददातु सदस्य देवयजनं मे देहीत्यथापो मे

होत्राशंसिन स्त्रो मे देवयजन ददातु होत्राशंसिनो देवयजन मे दत्तेत्युच्चै श्चमसो मे चमसाध्वर्यव स्त्रो मे देवयजन ददतु चमसाध्वर्यवो देवयजन मे दत्तेत्युच्चै स्ता वा एता देवता ऋत्विजामेव याभिर्देवयजन ददाति स दत्ते यजते यदुन्नत भूम्या अनूषर यत्र बहुला ओषधयश्च लोमशाखिणो यत्राप श्च स्वस्य न पुरस्ताद्देवयजनमात मति शिष्याद् यावान्छस्या प्रासीषर पुरस्था छाम्रात्या पीयाःप्सो भवन्ति यस्यैव मति रेचयन्ति काम दक्षिणत आगामुकावैन दक्षिणा भवन्ति काम पश्चादवरपुरस्था छाम्राङ्क्षेयाःप्सो भवन्ति काममुत्तरत उत्तरावैन देव यज्योपनामुकाभवत्युत्तरोत्तरिणी छास्य श्रीर्भवति यस्य पुरस्तात त्रीणि ज्योतीःपि दृश्येरन्नग्निराप आदित्य स्तद्देवयजन तच्चिशुक्रिय पुरस्ताच्चित देवयजन पश्चाच्चित श्म शानकरण प्रागुदक्प्रवण न्देवयजन पराग्दक्षिणाप्रवण श्म शानकरण यथा वै दक्षिण पाणिरेव देवयजन यथा सव्य स्तथा श्मशानकरण यथा श्मशानकरणन्तथाभिचरणीयाना देवयजन मप्युहैक आहुर्यस्मिन्नेव यस्मिंस्य देशे श्रद्धानो यजेत ऋध्नोत्येवेति ॥ १० ॥

इति षड् विंशब्राह्मण द्वितीय प्रपाठके दशमखण्ड ।

## इति द्वितीयः प्रपाठकः ।

---

यायान्यग्ने रसो भवति तेनात एव प्राचीन प्रचरन्त्यथै-तद्या तयाम परिशिष्यत ऋजोपस्तस्माद न तस्मै यदुपधीया-

पास्येषु नों तस्मै यदग्नावनु प्रहरेयुस्तेनाप एवाभ्यवयन्त्यापो वै सर्वस्य शान्ति प्रतिष्ठा पाप्मानं हैष हन्ति यो यजते तमिमं पाप्मानं हतमपोहरामीति तेनान्तरेण प्रतिपद्यन्ते चात्वालश्चोत्करश्चैतद्वै देवानां तीर्थं तदेतदपि राद्धाप्रान स्तीर्थे क इह प्रवोचद्येन देवा. पथा प्रपिबन्ते सुतस्येत्ये तद्वै देवानां तीर्थमतीर्थं एवैव यज्ञस्याभ्योन्यत् तस्मादेतेनैव प्रसृ ते प्रपद्येतैतेन निष्क्रामेत् चान् प्रच्युतान् देवयजना दमामान् य एतस्मिन्नवकाशे रक्षांस्य जिवांसमक्ष एतदग्निरक्षोहा सामापश्य सान्येतेनापाहत तान्यसुर्यं पहतानि सन्तीति देवा अकुर्वन्निर्त्यवैतद्रक्षांस्यप सेधति तस्या हावोहाव इति स्तोभातस्तोभत्यहावो स्वहावो स्विल्येवैतद्रक्षांस्यप सेधत्यग्नि दपति प्रतिदहतीत्याहरक्षांस्येव तत्प्रतिदहति यादाय पादायस्तोभा अनुपर्तन्ति रक्षसामपहत्यै गिम्वद् समविण इह यिग्वद समविण दहेयविणो वै रक्षांसि पाप्मानोऽविणोऽविण एवैतद्रक्षांसि पाप्मानमपसेधति तस्य विनिधनमाहुर्ये सुहत घ्नन्ति न स पुनरुद्गुणो यथाह पुन पुनरादायद् सुहतं हन्या दाहगीतत्ताद्धा र्यति च्छन्द सु भवति वारणमिव या एतच्छन्दो यदतिच्छन्दा वारणानीव रक्षांस्यरण्यायतनानि तद्यथा म्य मरण्य मभ्यवेनाति मानेन् साहगीतत्तद्वै सप्तपदासु भवति सप्त वै छन्दांसि चतुरुत्तराणि तद्यथा सर्वैश्छन्दोभिरभ्यवैनाति क्रामे त्साहगीतस्य त्रिवचन एकविंशति पदानि त्रि मासाद्द तश्चतुर्विंशति चतुर्विंशतिर्वमासा संवत्सर सम तस्य वा एतद संवत्सरस्य साम्ना ऽहोरात्राणि

हिङ्कारोऽर्द्धमासाः प्रस्तावो मासा आदिः षड्तव उद्गीथः पौर्णमास्यः प्रतिहारोऽष्टका उपद्रवो मावास्या निधनं तस्यं वा एतत् सवत्सरस्य साम्नो वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनं तस्माद्धेमन्तं प्रजा निधनकृता इवासते निधनरूपमिवैतर्हि तदाहुः कान्दिश सवभृथ मभ्यवेयुरिति प्राञ्चो भ्यवेयुर्देवानां वा एषा दिग्घत् प्राची वा देवानां दिक्कान्वीनुयज्ञः सन्निष्ठाता इति दक्षिणाभ्यवेयुः पाप्मानएंहैव हन्ति यो यजते तमिमं पाप्मानएंहतं दक्षिणाहरार्णीति पितृणां वा एषा दिग्यद्दक्षिणा या पितृणां दिक् तान्वीनुयज्ञः सन्निष्ठाता इति प्रत्यञ्चो भ्यवेयुर्मनुष्याणां वा एषा दिग्यत् प्रतीची या मनुष्याणां दिक्कान्वीनुयज्ञः सन्निष्ठाता इत्युदञ्चो भ्यवेयुर्नक्षत्राणां वा एषा दिग्यदुदीची या नक्षत्राणां दिक्कान्वीनुयज्ञः सन्निष्ठाता इत्यतो वावयतमथैव कथमया चापः स्वस्तटभ्यवेयुर्यद्वै विद्वान् कर्म करोत्यस्मादिदमिति वसीयानिव तेन भवति तदाहुः स्रवन्तीष्वभ्यवेयू३ स्थावरासू३ इति स्रवन्तीष्वभ्यवेयु. पाप्मानएं हैव हन्ति यो यजते तमिमं पाप्मानएंह तमापः प्रवहन्तामिति स्थावरायाः ग्रीष्मत्यास्त्वभ्यवेयुरितो मा यज्ञो विक्षुब्धः प्रत्युपतिष्ठाता इत्यतो वावयतरथैकत रया चाप स्वस्तादभ्यवेयुर्यद्वै विद्वान् कर्म करोत्यस्मादिदमिति वसीयानिव तेन भवति ॥ १ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके प्रथमखण्डः ।

एकस्यै हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया पञ्चभ्यो हिङ्करोति स उत्तमयैकस्यै हिङ्करोति

स प्रथमया तिसृभ्यो हिङ्करोति स पराचीभि पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभि रिपुन्निहतो विष्टुतिरभिचरेत् स्तुवीतानीक प्रथमेपुर्दनुजर्या यत्तिस्र सन्दधाति व्येव पञ्चभि सृजते स्तृणुते भ्रातृव्य वसीयाए आत्मना भवति य एतया स्तुते ॥ २ ॥

इति षडविंशब्राह्मणे तृतीयप्रपाठके द्वितीयखण्ड ।

तिसृभ्यो हिङ्करोति स पराचीभि तिसृभ्यो हिङ्करोति स पराचीभिर्वभ्या हिङ्करोति स तिसृभि स तिसृभि स तिसृभिरभिचरत्स्तुवीत वज्रो वै त्रिवृद् वज्रस्त्रिणवो य त्त्रिवृत्त्रिणवाभ्या पञ्चदश विदधाति वज्रमेव तत्सम्यक् सन्दधाति एवमेव वै वज्र साधुर्यदारम्भणतोऽणीयान प्रहरणत स्थवीयाएंस्तेन पाप्मान भ्रातृव्यएंस्तृणुते वसीयाएं आत्मना भवति य एतया स्तुते ॥ ३ ॥

इति षडविंशब्राह्मणे तृतीयप्रपाठके तृतीयखण्ड ।

एतयैवाभिचरत्स्तुवीत वज्रो वै त्रिवृद् वज्र पञ्चदशो वज्र स्त्रिणवो यत्त्रिवृत्पञ्चदश त्रिणवै सप्तदश विदधाति वज्रमेव तत्सम्यक सन्दधात्येव मिव वै वज्र साधुर्यदारम्भणतो णोयान प्रहरणत स्थवीयाएंस्तेन पाप्मान भ्रातृव्याए स्तृणुते वसीयाए आत्मना भवति य एतया स्तुते ॥ ४ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके चतुर्थखण्ड ।

तिसृभ्यो हिङ्करोति स पराचीभिर्वभ्यो हिङ्करोति स तिसृभि स तिसृभि स तिसृभिर्वभ्यो हिङ्करोति स तिसृभि स तिसृभि स तिसृभिरभिचरत्स्तुवीत वज्रो वै त्रिवृद्वज्र स्त्रिणवो यत्त्रिवृत्त्रिणवाभ्यामेकविंएश विदधाति

यजुरेव तत्सम्यक् सन्दधात्येवमेव वै यजु. साध्वर्यदारम्भ-
णतो गीयान् प्रहरणत: स्वबीयाध्स्तेन पाप्मानं भ्रातृव्यध्
स्तिणुते वसीयाध् आत्मना भवति य एतया स्तुते ॥ ५ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके पञ्चमखण्ड: ।

नवभ्यो हिङ्करोति स तिसृभि: स तिसृभि. स तिसृ-
भिर्नवभ्यो हिङ्करोति स तिसृभि: स तिसृभि स तिसृभि-
र्नवभ्यो हिङ्करोति स तिसृभि स तिसृभि. स तिसृभि रभि-
परस्तृत्वीत वज्रो वै त्रिणवो वज्र मेव तत्पराञ्च प्रवर्त्तयति
स्तृत्वै तेन पाप्मान भ्रातृव्यध्स्तिणुते वसीयाध्आत्मना
भवति य एतया स्तुते ॥ ६ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके षष्ठखण्ड ।

स्वरान्त. प्रथम स्विरात्रो गायत्री प्राणो वै गायत्री
प्रजापति: स्वर: प्रजापति मेवाप्नोति निधनान्तो द्वितीय
स्त्रिष्टुब्वीर्यं वै त्रिष्टुप् त्रिष्टुभ: पुरुष: पुरुष मेवाप्नोतीडान्त
स्तृतीयो जगती पशवो वा इडा पशवो जगती जागता:
पशव. पशून् वाप्नोति प्रहतच्छन्दा: प्रथम स्विरात्र स्तेन सो
यातयामायौत्तरस्य छन्दाध्सि व्यूहन्ति जगत्य: प्रतिपदो
भवन्ति जगतीनां लोके त्रिष्टुभ त्रिष्टुभां गायत्रस्तेन सो
यातयामायौत्तमास्य छन्दाध्सि व्येवो हन्ति त्रिष्टुभ: प्रति-
पदो भवन्ति त्रिष्टुभां लोके जगत्यो जगतीनां गायत्र स्तेनो
एव सो यातयामाभि या एता अन्योन्यस्यै लोक मभ्य-
ध्यायन् काम मेवेना गमयन्त्याप्नोति तं काम यस्मै कामा-
यैव आहवर्त तस्माद् सुर्गो न सद्ध्यहन स्त्रस्त्रादिपरि-
णीतो वहीयाध्सौ भवत साम्ना दुभयतो दन्त. छन्दस्तै

तैधति स्तुत्वे वषट्कारणिधनं भवत्येष वै वज्राणामो-
जिष्ठो यत्साम यजुश्च वहवो वषट्कुर्वन्ति तमेवास्मै
वज्रं प्रहरति स्तुत्वा उभे बृहद्रथन्तरे भवत उभाभ्या-
मेवास्मै बृहद्रथन्तराभ्यां वज्रं प्रहरति स्तुत्वै पराचीषु
रथन्तरं भवति पराच मेवास्मै वज्रं प्रहरति स्तुत्वे
तस्य रथन्तर पृष्ठ बृहद्ब्रह्म सामैष वै साम वज्रस्तमेवास्मै
वज्रं प्रहरति स्तुत्वै य कामयेत जीवेदिति तस्य बृहत्पृष्ठं
कुर्याद्रथन्तरं ब्रह्म साम क्षत्रं वै बृहत्पशवो रथन्तरं क्षत्रेणै-
वास्य पशून् हन्त्यपशुर्भवति जीवति य कामयेत पराम्परा
वतमियान्न प्रतितिष्ठेदिति पवमाने रथन्तरं कुर्याद्बृहत्-
पृष्ठं ब्रह्म साम बृहद्रथन्तराभ्या मेवैन एभ्यो लोकेभ्य
उद्धृत्य श्रवेन प्रज्ञापयति पराम्परावतमेति न प्रतितिष्ठति
वार्षाहरे पवमानमुखे भवत. सर्पीपगवे नानदं क्रूराणि
सामानि सम्भरन्ति स्तुत्वै तैल्वको वा बाधको वा यूपस्य
स्फ्याय भवनध्यै अधिपतये अग्नये रुद्रवते लोहितः पशुः
सादयन्त्युपाएश्छन्तयांमो शरमयं बर्हिः श्रौत्यैं वैभीदक
इध्मो विभित्वै लोहितोष्णीषा लोहित वाससो निवीता
ऋत्विजः प्रचरन्ति स्तुत्वै नव नव दक्षिणा भवन्ति नवय-
न्त्येवैनं तत् । ८ ।

इति षड्विंशब्राह्मणे तृतीयप्रपाठके अष्टमखण्डः ।

त्रिवृदग्निष्टोमस्तस्येषुं त्रिष्टुभि कृत्वाभिचरन्यजेतेषु
वधो वै पुरायुषो हन्ति यदिषु त्रिष्टुभि करोति पुरैवैन
मायुषः प्रहयति त्रिवृद्वै स्तोमानां क्षेपिष्ठो यभिवृषयत्याग्नी
यस्त्रिणवा इति वषट्कारणिधनं भवति सत ए भवत्या

सप्तमात्। पुरुषा इमायतनो भवति यमितेनाभिचरन्ति समानमितरच्छ्येनेन ॥ ८ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके नवमखण्डः ।

अथैष सन्दंशेनाभिचरन्यजेत यद्वै दुरादानᳪसन्दᳪशे तदादत्ते यद् द्वौ द्वौ स्तोमौ स इव यथाह दुरादानᳪसन्दᳪशे नात्तु ह्वाया इदेतैव सैवेन मितेनादत्ते त्रिवृतᳪस्तोमᳪ सम्पद्यते बृहती छन्दोष वज्रो वै त्रिवृत्पशवो बृहती वज्रेणै-वाम्य पशून् हन्त्यपशुर्भवति वैयर्थं भवति अश्वमेवैन कराति परिहृत्यैव भवति पर्येवेन हरति प्रायोहरे पवमान-मुखे भवत. काशी तीपगवे नानदᳪसाम क्रूराणि सामानि सम्भरन्ति स्तुत्वै नि सम्रद्गस्तेन क्रूरः समानमितर-च्छ्येनेन ॥ १० ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके दशमखण्ड ।

अथैष वज्रेणाभिचरन् यजेत वज्रेणैवास्मै वज्रं प्रहरति स्तुत्वै सर्वः पञ्चदशो भवति वज्रो वै पञ्चदशस्तमेवास्मै वज्रं प्रहरति स्तुत्वा उक्थ्य, षोडशिमान् भवति पशवो वा उक्-थानि वज्र षोडशी वज्रेणैवास्मै वज्रं प्रहरति स्तुत्यै तस्य महानाम्नी, षोडशि साम भवति वज्रो वै महानाम्नी वज्र. षोडशी वज्रेणैवास्मै वज्र प्रहरति स्तुत्यै समानमितरत् पूर्वेण ॥ ११ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके एकादशखण्डः ।

अतिरात्रश्चतुर्विंशं प्रायणीय महरभिजिच्च स्वरसा मानो दिवाकीर्त्यमहरस्य स्वरसामानो विश्वजिन्महाव्रत-मतिरात्रश्च विश्वेदेवाः सत्रमासत सोमेन राज्ञा गृह-

प्रतिमा तेऽब्रुवंत्सोम एव नो राजा सर्वत्र विभवेदिति तस्मात्सोमो राजा सर्वाणि नक्षत्राण्युपैति सोमो हि रेतोधा नवाहꣳ संवत्सरस्य गर्भमुपयन्ति नवाहो वै संवत्सरस्य प्रतिमा नव प्राणाः प्राणानेवावरुन्धते प्रजावन्तो ओषधा ज्योति रश्नुवते य एता उपयन्ति ॥ १२ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके द्वादशखण्डः ।

## इति तृतीयः प्रपाठकः ।

---

ओम् । प्रजापतिस्तपोऽतप्यत तस्य ह वै तप्यमानस्य मनः प्राजायत देवांत्सृजेयमिति तद्दिवे देवा असृजन्त दिवा देवानसृजत नक्तमसुरान् यद्दिवा देवानसृजत तद्देवानां देवत्वं यदसूर्यं तदसुराणामसुरत्वं यत्पीतत्वं तत्पितॄणां देवा वै स्वर्गकामास्तपोऽतप्यन्त तेषां तप्यमानानाꣳ रसो-जायत पृथिव्यन्तरिक्षं द्यौरिति ते अभ्यतपꣳस्तेषां तप्य-मानानाꣳ रसोऽजायत ऋग्वेदः पृथिव्या यजुर्वेदोऽन्तरिक्षात् सामवेदोऽमुष्मात्ते अभ्यतपꣳस्तेषां तप्यमानानाꣳ रसो-जायत ऋग्वेदाद्गार्हपत्यो यजुर्वेदाद्दक्षिणाग्निः सामवेदा-दाहवनीय स्ते अभ्यतपꣳस्तेषां तप्यमानानां पुरुषो जायत सहस्रशीर्षा सहस्राक्षः सहस्रपात्ते देवाः प्रजापति मुप ब्रुवन् वेदशरीरैर्वा इदमस्तशरीरं न ह वा इद मत्यो समाप्तातेति ते ब्रुवन् को नामासीति स होवाच यज्ञो नामेति तेषां प्रजापतिः सर्वो यज्ञसस्था मुपैति सर्वो ह वा एष यज्ञसꣳस्था मुपैति यद्गार्हपत्यं प्रादुष्करोति सा

दीक्षणीयो यद्दक्षिणाग्निं चाहवनीयञ्च सा प्रायणीया यत्समिधोऽभ्यादधाति ता उपसदोऽथ यस्याज्यं सुतप्तꣳ स्कन्दति सा वै स्कन्नानामाहुतिस्ततो वै यजमानः प्रमायुर्भवति वरो देयः सैव तस्य प्रायश्चित्तिरथ यस्याज्यमनुत्पूतꣳ स्कन्दत्यसौ वा अस्कन्नानामाहुतिस्ततो वै यजमानस्य चित्तं प्रमायुर्भवति चित्तन्देयꣳ सैव तस्य प्रायश्चित्तिर्यद्गार्हपत्ये जुहोति तत्प्रातःसवनं यद्दक्षिणाग्नौ जुहोति तत्तृतीयसवनं यन्मार्जयते सोऽस्यावभृथो यद्दत्वा ददाति तेनोदयनीयस्योदवसानीयस्य समाप्त्या अथ यस्याग्निर्मथ्यमानो न जायेतान्यस्माद्धृत्वाग्निरवकाशे जुहुयाद्ब्राह्मणस्य वा हस्तेऽजस्य वा कर्णे कुशस्तम्बे वाप्सु वा जुहुयादन्यैः शतहुतान् होमानेकः शिष्यहुतो वरं शिष्यैः शतहुतान् होमानेकः पुत्रहुतो वरं पुत्रैः शतहुतान् होमानेको ह्यात्महुतो वरं स्वयं होता स्वयं दोग्धा स्वयमेवोपतिष्ठेताग्निहोत्रं होम्यमेयं दक्षिणा सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ १ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके प्रथमखण्डः ।

प्रजापतिर्वा एतेन सहस्रसꣳवत्सरमसृजत तेषां प्रजापतिः सहस्रसꣳवत्सरं गवामयनेनावरुन्धद्गवामयनं द्वादशाहे द्वादशाहमतिरात्रेऽतिरात्रꣳ षोडशिनि षोडशिनमुक्थ्य उक्थ्यमग्निष्टोमेऽग्निष्टोममिष्टिपशुबन्धयोरिष्टिपशुबन्धावग्निहोत्रे सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ २ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके द्वितीयखण्डः ।

प्रजापति र्देवेभ्य औदुम्बरो मुच्छ्रयत्यसुषिरमूला मर्यान्थं पृथुबुध्नो मेकाजा यजमानमात्रौदुम्बरो भवत्यथ कुश वामना यजमाना ऊर्ध्वबाहव प्रच्छेदन कुर्युः कतिच्छदनौदुम्बरो भवति नवच्छन्दनाग्निष्टोमसाध्य. केचैकादश वैश्यस्तो मातिरात्रपौण्डरीकेषु साप्तदश वाजपेयाप्तोर्यामो रैकविंशत्यश्व मेधेऽष्टाचत्वारिंशतं पुरुषमेधे परिमित सर्वमेधे य एवं विद्वा नौदुम्बरो मुच्छ्रयत्विति तमेवाप्नोति प्रजापति रकामयत पचिति करवाणि य एव विद्वौदुम्बरो मुच्छ्रयत्यपचिति मेवाप्नोति ॥ ३ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके तृतीयखण्डः ।

यपदूरोति सचीरं स्थूलं मूले बालाग्र मनुरूपं पशो वै यपो वज्रेणैवास्मै भ्रातृव्यं प्रहरत्यष्टाः श्रीः करोति दश दिशः परिगृह्यालुभयतः पोतौ हि यूपे करोति पञ्चदश सप्तदशैक विंशति ररत्नि वा पालाशं पुष्टिकामस्य वैल्वं ब्रह्मवर्चस कामस्योदुम्बरमन्नाद्यकामस्य खादिरं बलकामस्य वैभीदक राजवर्चो भ्रातृव्यवतः क्रमुकाश्वत्थपापाणा यशस्कामस्य यत्किञ्चयज्ञिय पशुकामस्य तत्र वर्जनीया भवन्ति गड्डुली न्निपिनो व्याहत्तः कुठिः कुब्जः शूलो दग्ध. शुष्क. सुषिरो घुणदग्ध इत्यप्रशस्ता अथ प्रशस्ताः शुभाहता अनुपूर्वसमाः प्रशस्ता यूपस्याधिदेवतान्यग्नि पूर्वायां यमो दक्षिणायां वरुणः पश्चिमायां सोम उत्तरायां या विदिशस्ता रुद्रादित्यवद्रुमरुद्गणयोपराजिताः पितरश्चाधरायां साध्यायोर्द्ध्वायां सर्वदेवत्योवै यूपो वै वज्ररूपो वज्रीभूत्वा देवानुपतिष्ठते न

देवाः प्रजापति मुपाधावन् यूपेन प्रहरन्त्या रोपयन्त्या योधयन्ति च तद् यूपस्य यूपत्वं मूल मरत्निं सत्वच निखनेत्तस्य यद्वै पान्यान्तत्पितॄणां यदूर्द्धं तन्मनुष्याणां यत्तदधःरशनाया ओषधिवनस्पतीनां यदूर्ध्वं रशनाया स्तद्विश्वेषां देवाना माप्लावयन्त्यलं कुर्वन्त्यहतेन वसनेनाच्छादयन्तीति च तं गन्धर्वाप्सरसा मिन्द्रस्य चषाल यदूर्ध्वं चषालस्याङ्गुलमात्रं काय्यं तत्साध्याना देवाना प्राची सन्नमत्र्येतद्दै विष्णो. परमम्पदं तत्सत्तैवः शरीरं शिरः संवत्सरो वेदा रूपाणि सवत्सर एव प्रतितिष्ठति य एवं वेद ॥ ४ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके चतुर्थखण्डः ।

ब्रह्मवादिनो वदन्ति कस्माद् ब्राह्मणः सायमासीनः सन्ध्या मुपास्ते कस्मात् प्रातस्तिष्ठन् काच सन्ध्या काच सन्ध्यायाः कालः किञ्च सन्ध्यायाः सन्ध्यात्व देवाश्च वा असुराश्चास्पर्द्धन्ततेऽसुरा आदित्यमभिद्रवन्स आदित्योबिभेत्तस्य हृदय कूर्मरूपेणातिष्ठत् स प्रजापति मुपाधावत् तस्य प्रजापतिरेतद्भेषज मपश्यद्दतच्च सत्यञ्च ब्रह्म चोङ्कारश्च त्रिपदाच गायत्री ब्रह्मणो मुखमपश्यत्तस्माद्ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते सज्योतिष्याज्योतिषो दर्शनात् सोऽस्याः काल. सा सन्ध्या तत् सन्ध्यायाः सन्ध्यात्वं यत्साय मासीन सन्ध्यामुपास्ते तया घोरभ्यान वज्रश्च यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभवन्ति ता विप्रुषो वज्री भूत्वाऽसुरानपाघ्नन्ति ततो देवा अभवन् परा सुरा भवत्यात्मना परास्य भ्रातृव्यो भवति य एव वेद यत् सायञ्च प्रा-

तथ सन्ध्यामुपास्ते तथा वीरस्थानं स्थानञ्च सन्ततमविच्छिन्नं भवति य एव वेद ॥ ५ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके पञ्चमखण्डः ।

अथैषा चन्द्रमसः क्षयवृद्धीभवति यदा वै चन्द्रमा क्षीयते चाप्यायते च तदनुव्याख्यास्यामः पूर्वपक्षे वै देवा दीक्षन्ते तेऽपरपक्षे सोमं भक्षयन्ति तस्येमानि त्रीणि पात्राण्युपधीयन्ते पृथिवी पात्रमन्तरीक्षं पात्रं द्यौः पात्रमिति तं देवा दिव्येन पात्रेणादित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्ती तेऽन्तरिक्षेण पात्रेण रुद्रा द्वितीयं पञ्चकलं दशमीं भक्षयन्ति ते पृथिव्या पात्रेण वसवस्तृतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति षोडशी कलावशिष्यते षोडशकलो वै चन्द्रमाः स औषधीर्वनस्पतींश्च गाश्च पशूंश्चादित्यञ्च ब्रह्म च ब्राह्मणांश्चानुप्रविशति ते देवा इन्द्रज्येष्ठा सोमपाश्चासोमपाश्च यथा पितरं पितामहं प्रपितामहं वा वृद्धं प्रलयमुपगच्छमानं व्याधिगतं मरिष्यतीति या तां रात्रिं वसन्ति तदमावास्याया अमावास्यात्वं तस्मादमावास्याया नाध्येतव्यं भवत्यथ सम्भरणञ्च तस्मोषधिभ्यश्च वनस्पतिभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच्च ब्रह्म च ब्राह्मणा सन्नयन्ते तत्सान्नाय्यस्य सान्नाय्यत्वं चन्द्रमा वै धाता या पूर्वा पौर्णमासी सानुमति योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्योऽनुपश्यन्त्यन्यं न पश्यति तन्मिथुनमेवास्य भवति पुष्ये चानुमतिर्ज्ञेया सिनीवाली तु द्वापरे खार्वायां तु भवेद्राका शतपर्वं कुहूर्भवेत् नूतने चानुमतिं विद्याद्

यस्मिन् दृश्येत सा सिनीवाली राकायां तु, सम्पूर्णश्चन्द्रस्तु कुहूर्न दृश्येत ॥ ६ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके षष्ठखण्डः ।

स्वाहा वै कुतः सम्भूता कस्य दुहिता केन प्रकृता किं गोत्रा कत्यक्षरा कतिपदा कति मात्रा कति वर्णा कत्युच्छ्वासा किंशास्त्रा. शरीरं कान्यङ्गानि कानि लोमानि कति शिरांसि कति वा चक्षूंषि किमस्याः प्रास्यं किं प्राहुता कौ बाहू कौ पादौ क्व च स्थिता किमधिष्ठाना कथं स्वाहां प्रतिगृह्णासि ब्रूहि स्वाहाया रूपं दैवतञ्च स्वाहा वै सत्यसम्भूता ब्रह्मणो दुहिता ब्रह्मप्रकृता लातव्यसगोत्रा त्रीण्यक्षराण्येकं पदं त्रयो वर्णाः शुक्लः पद्मः सुवर्ण इति चत्वारोऽस्यै वेदाः शरीरंषडङ्गान्यङ्गान्योषधिवनस्पतयो लोमानि द्वे चास्या. शिरसी एकं शिरोऽमावास्या द्वितीयं पौर्णमासी चक्षुषी चन्द्रादित्यौ बाज्यभागौ हुतं दक्षिणा प्राहुता ऋग्यजुःसामभ्यां ऋग्यजुः सामगतिः सा स्वाहा सा स्वधा स वषट्कार. सैषा देवेषु वषट्कारभूता प्रयुज्यते पितृयज्ञेषु स्वधाभूता शकटी मुखी पृथिवीमन्तरिक्षेण विपर्येति तस्या अग्निर्दैवतं ब्राह्मणो रूपं यत्कामास्ते जुहुमस्तन्नो अस्तु वयएस्याम पतयो रयीणाएस्वाहेति तस्मात् तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ ७ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके सप्तमखण्डः ।

इति चतुर्थ-प्रपाठकः ।

अथातोऽद्भुतानां कर्म्मणां शान्तिं व्याख्यास्यामः पाला-
शानां समिधा मष्टसहस्रं जुहुयादैन्द्रयाम्यवारुणधानादा-
ग्नेय वायव्यसौम्यवैशाव्यै त्वष्टाधिन्द्रायेन्दोमरुत्वतेनाकेसुपर्णे
मुपययततं घृतवतीभुवनानामभिश्रियाऽभित्यन्देवꣳसविता-
रमोण्योरग्निन्दूत हृणीमहे—वात आवातुभेषजꣳ—सोमꣳ
राजानं वरुणमिदं विष्णुर्विचक्रमे—इत्येतानि साममह-
त्यष्टशतं जपित्वा स्वस्ति वाचयित्वा स्वस्ति हैषां भवति
स्वस्तिदाविशस्पतिः—स्वस्त्ययनं—तार्क्ष्यं—मरिष्टनेमिं—त्व-
मूषूवाजिनं देवजूत—मायुर्विश्वायुः—शतञ्जीवशरदोव-
र्द्धमान—इत्येतैः सम्भाराणामुपस्थानं कृत्वा स्वस्ति वाच-
यित्वा स्वस्ति हास्य भवति स्वस्ति हास्य भवति ॥ १ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके प्रथमखण्डः ।

देवाश्च वा असुराश्चेषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापति-
मुपाधावꣳस्तेभ्य एतां दैवीं शान्तिं प्रायच्छत्ते ततः शा-
न्त्यैका असुरानभ्यजयꣳस्ततो देवा अभवन् परा सुरा
भवत्यात्मना परास्य भ्रातृव्यो भवति यएव वेदाथ पूर्वाह्ण
एव प्रातराहुतिं हुत्वा दर्भांश्छमीं क्षीरणां दधि सर्पिः
सर्षपान् फलवतो मधु मागन्त शिरीष मित्येतान्याहरेदा-
हारयेद्वा स्नातः प्रयतः शुचिः शुचिवासाः स्थण्डिलमुप-
लिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय
नित्यतन्त्वौदनकृसरयवागूरक्तपायसदधि क्षीरघृतपायस-
घृतमितिहुतोत्तराः पृथक् चरवः सर्वे सर्वेषां वा पा-
यसः ॥ २ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके द्वितीयखण्डः ।

स प्राचीं दिशमन्वावर्त्तेतेथ यदास्य मणिमणिककुम्भ-स्थाली दरणमायामीराजकुलविवादो वा यानच्छत्रशय्या-सनावसथ ध्वजपताकागृहैकदेशप्रभञ्जनेषु गजवाजिमुख्या वा प्रमीयाः प्रमीयन्त इत्येवमादीनि तान्येतानि सर्वाणी न्द्रदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्तीन्द्रायेन्द्रोमरुत्वत इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोती-न्द्राय स्वाहा शचीपतये स्वाहा वज्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ३ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके तृतीयखण्डः ।

सदक्षिणा दिशमन्वावर्त्ततेथ यदास्य प्रजया पशुषु शरीरे वारिष्टानि प्रादुर्भवन्ति व्याधयो वा अनेकविधा अतिस्वप्न अस्वप्नमति भोजन मभोजन मालस्य वृषमजी-र्णनिद्राण्येवमादीनि तान्ये तानि सर्वाणि यमदैवत्यान्यद्भु-तानि प्रायश्चित्तानि भवन्ति नाकेसुपर्णमिति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभि जुहोति यमाय स्वाहा प्रे-ताधिपतये स्वाहा दण्डपाणये स्वाहेश्वराय स्वाहा सर्व-पापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥४॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके चतुर्थखण्डः ।

स प्रतीचीं दिशमन्वावर्त्ततेथ यदास्य चैत्यरहस्यं ध्येष्व धान्ये व्वीतयः प्रादुर्भवन्तीतयो वा अनेकविधा आखुपत-ङ्गपिपीलकमध्वकभौमकशुकमरभकसौम्यक इत्येवमादीनि तान्येतानि सर्वाणि वरुणदैवत्यान्यद्भुतानि प्रायश्चित्तानि

भवन्ति पृतवती इति स्थालीपाकं हुत्वा पञ्चभिराज्या-हुतिभिरभि जुहोति वरुणाय स्वाहा अपाम्पतये स्वाहा पाशंपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ५ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके पञ्चमखण्डः ।

स उदीचीं दिशमन्वावर्त्ततेऽथ यदास्य कनकरजतव-स्त्रवज्रवैदूर्यविमुक्तामणिवियोगा भवन्त्यारण्या वा विप र्य्यस्तोऽयथा अन्यानि क्रूराणि मित्राणि वा विरुच्यन्ते रिष्टानि वा वयांसि गृहमध्यासन्ते वाल्मीकभौमानि वा जायन्ते छत्राक वोपजायते मधूनि वा निलीयन्त इत्ये-वमादीनि तान्येतानि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यभित्य देवमिति स्थालिपाकं हुत्वा पञ्चभि राज्याहुतिभिरभिजुहोति वैश्रवणाय स्वाहा यक्षाधि-पतये स्वाहा हिरण्यपाणये स्वाहेश्वराय स्वाहा सर्वपा-पशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ६ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके षष्ठखण्डः ।

स पृथिवी मन्वावर्त्ततेऽथ यदास्य पृथिवी नटति स्फु-टति कूजति कम्पति ज्वलति रुदति धूमायत्यकस्मात् स लिलमद्गिरति प्रयन्ति मज्जति निमग्नमुत्प्लवत्यकाले च पुष्पफलमभिनिवर्त्तते स्त्रवतरीगर्भोजायते यदा मज्जति हस्तिनो भूकम्पोजायते प्रासाद भिनत्ति यत्र तत्र राजा विनश्यति गौर्गौर्ह मारोहेद्ग्राम दन्दिपोत्येवमादीनि स-र्वाण्यग्निदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यग्निन्दूतं वृणीमह इति स्थालीपाकं हुत्वा पञ्चभिराज्या हुतिभि-

रभिजुहोत्यग्नये स्वाहा हविष्पतये स्वाहाग्निप्राणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाय साम गायेत् ॥ ७ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके सप्तमखण्डः ।

सोऽन्तरिक्षमन्वावर्त्ततेऽथ यदास्य विवाता वाता वायन्त्यभ्राणि चापरूपाणि दृश्यन्ते खरकरभमन्थकङ्ककपोतोलूकका-कगृध्रश्येनभासवायसगोमायुसꣳस्थान्युपरि पाꣳसुमाꣳसवसास्थिरुधिरवर्षाणि प्रवर्त्तन्ते काकमिथुनानि दृश्यन्ते रात्रौ मणिधनु पश्येच्छशका ग्राम प्रविशन्ति वृक्षा स्रवन्ति रुधिराण्याकाशे राजकुले वसन्तोऽन्ये वसादीनि तान्येतानि सर्वाणि वायुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति वात आवातु भेषजमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुतिभिरभि जुहोति वायवे स्वाहा मरुद्ग-ताधिपतये स्वाहा शीघ्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ८ ॥

इति षड्विंशब्राह्मणे पञ्चमप्रपाठकेऽष्टमखण्डः ।

स दिवमन्वावर्त्ततेऽथ यदास्य तारावर्षाणि चोल्काः पतन्ति निपतन्ति धूमायन्ति दिशो दह्यन्ति केतवश्चोत्ति-ष्ठन्ति नवाꣳ शृङ्गेषु भूमौ जायते गवास्तनेषु रुधिरꣳ स्रवत्यथ हिमाभिपतत्येवमादीनि तान्येतानि सर्वाणि सामदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति सोमꣳ राजानं वरुणमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुति-भिरभि जुहोति सोमाय स्वाहा नक्षत्राधिपतये स्वाहा

"चक्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ९ ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके नवमखण्डः ।

स यदं दिव मन्वावर्त्ततेऽथ यदास्यायुक्तानि यानानि प्रवर्त्तन्ते देवतायतनानि कम्पन्ते दैवतप्रतिमा हसन्ति रुदन्ति नृत्यन्ति स्फुटन्ति खिद्यन्त्युन्मीलन्ति निमीलन्ति प्रतिप्रयान्ति नद्यः कबन्धमादित्ये दृश्यते विजले च परिषिञ्चति केतुपता काञ्चनवर्णविषाणानि प्रज्वलन्त्यस्थानां च बालधीष्वङ्गाराः धरन्त्यहतानि मर्माणि कनिक्रदन्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदेवताद्भुतानि प्रायश्चित्तानि भवन्तीदं विष्णुर्विचक्रम इति स्थालीपाकं हुत्वा पञ्चभिराहुतिभिरभि जुहोति विष्णवे स्वाहा सर्वभूताधिपतये स्वाहा चक्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् खननाद्दहनाद्भिमर्शनाद्धोभिराक्रमणाच्चतुर्भिः शुध्यते भूमिः पञ्चमाच्चोलेपनात् सम्भारान् प्रदक्षिणं मानीय ब्राह्मणान् स्वस्ति वाच्यैतैः सम्भारैर्युपस्पृश्य तदभ्युक्ष्येच्चास्यति घातो ब्राह्मणभोजनं हिरण्यं गौर्वासोऽश्वो भूमिर्दक्षिणा इति शाम्यति घातः शान्त्यर्थः शान्त्यर्थः ॥ १० ॥

इति षड्विंशब्राह्मणे पञ्चम-प्रपाठके दशमखण्ड ।

सोऽथस्ताद्दिव मन्वावर्त्ततेऽथ यदास्य गर्वा मानुषमहिष जाश्वोष्ट्राः प्रसूयन्ते हीनाङ्गान्यतिरिक्तानि विकृतरूपाणि या जायन्ते असम्भवानि सम्पतन्त्यचलानि चलन्तीत्येवमादीनि तान्येतानि सर्वाणि रुद्रदेवत्यान्यद्भुतानि

प्रायश्चित्तानि भवन्त्यघोराज्ञानमिति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति रुद्राय स्वाहा पशुपतये स्वाहा शूलपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ११ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके एकादशखण्ड ।

स सर्वान्दिश मन्वावर्त्तेत यदास्या मानुषाणां मति श्रुति मतिदु ख वा पर्वता स्फुटन्ति निपतन्त्याकाशाद्भूमिं कम्पती महाद्रुमा उन्मसन्त्याश्मान प्लवन्ति तटाकानि प्रज्वलन्ति चतु पाद पञ्चपाद भवतोत्येवमादीनि तान्येतानि सर्वाणि सूर्यदेवतान्यद्भुतानि प्रायश्चित्तानि भवन्त्युदुत्यं जातवेदसमिति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिरभि जुहोति सूर्याय स्वाहा सर्वग्रहाधिपतये स्वाहा किरणपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ १२ ॥

इति षड्विंशब्राह्मणे पञ्चम प्रपाठके द्वादशखण्ड ।

## इति पञ्चम-प्रपाठकः ।

---

समाप्तमिदं षड्विंशब्राह्मणम् ।

# अथ षड्‌विंशब्राह्मणभाष्यम् ।

## प्रथमप्रपाठकः ।

---

### प्रथम खण्डः ।

ॐ नमः सामवेदाय । हरिः ओम् ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युः तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणं चाद्यं प्रौढमाख्यातमादरात्
अथ द्वितीयं षड्‌विंशब्राह्मणं व्याचिकीर्षति ॥ ५ ॥

अस्मिन् ताण्डिशेषब्राह्मणे पूर्वाख्युक्तानि कर्माणि उक्तानामपि ये भेदास्ते च पठ्यन्ते ।

तत्र प्रथमं सुब्रह्मण्योच्यते । तच्च सवनत्रयेऽपि ज्ञेयम् ॥ ततो ब्रह्मकर्त्तव्यम् । ततो व्याहृतिहोमादिनैमित्तिकं

प्रायश्चित्तम् ॥ ततः सौम्यचरुविधिः । ततो बहिष्पवमान धर्माः । ततः किञ्चित् प्रकीर्णकम् । ततो होत्राद्युपहवः । तत आर्त्विज्येषु ऋत्विगादिविधानम् । ततो नैमित्तिका होमाः । ततो अध्वर्युप्रशंसा । ततो देवयजने विधेयं कर्म । ततोऽवभृथः । ततः अभिचारसंज्ञका विहृतयः । ततो द्वादशाहस्तुतिः । अथ श्येनादि विधिः । ततो वैश्वदेव सत्रम् । इत्येवं प्रतिपाद्यमानार्थानामनुक्रमणिका ॥

तत्र प्रथमं तदुत्तरे तिष्ठं सुब्रह्मण्यः सुब्रह्मण्या माह्वय-तीति विवक्षयेद माम्नायते । अग्रे स्वाध्यादौ निरुपपद स्याग्रशब्दवदर्थत्वात् । इदं वक्ष्यमाण सुब्रह्म एते द्वे सुब्रह्म सुब्रह्मणी ते द्वे एवास्ताम् अभूताम् ॥

ततः किमित्यतआह—ततः अनन्तर सुब्रह्म देवेभ्यः सकाशा दुदक्रामन् उदगच्छन् ततोऽपि किमित्यत आह—

अथ ह सुब्रह्मणि देवेभ्य उत्क्रान्ते सति अनन्तरमेव स यदा व्युत्क्रमिषुः ब्रह्मदेवा वस्वादयो यत्नेन पर्यग्रहन्त परि-गृहीतवन्तः । अत्र किं ब्रह्मशब्देनोच्यते किञ्च, सुब्रह्म शब्देनेति । अग्नि र्वै ब्रह्मशब्दवाच्यः मुख्यत्वात् । अग्निमुखा वै देवा इति श्रुतिः। असौ चिदात्मनि वा आदित्यः सुब्रह्म च एतम्मन्त्रः । तथा चेन्द्रं प्रक्षाल्य सूयते असावादित्य इति । मन्त्रान्तरमपि । यदद्यमद्य वृत्रहन्नुदगा अभि सूर्य्य । सर्वं तदिन्द्र ते वशइति इन्द्रस्य च सुब्रह्मत्वम् सर्व देवाधिपत्वात्कृते देवाः किमकारिषुरित्यत्राह । तदुक्ता तं सुब्रह्मदेवा यज्ञसम्बन्धी मन्त्रातरि वक्ष्यमाण उत्कटदेशी अन्वैच्छन् अन्वेषण मकार्षुः कामी यज्ञस्य सन्धिस्तत्राह ।

प्रथमेव यज्ञस्य सन्धिः सङ्घातः यत्र यस्मिन् देशे सोम मुद्दृत्य क्रीतोन्ते पांशवोऽभिवितिं उत्करः वेदेरुत्तरपूर्व-भागः । प्रकृते किमायात मित्यत आह—यज्ञस्य सन्धि-रुत्करः । तस्मात्तत्रोत्करे देशे तिष्ठंत्सुब्रह्मण्यो नाम ऋत्विक् सुब्रह्मण्यों सुब्रह्मण्यि साधुरिति निगदो नियत स्त्रीलिङ्गः ता मर्हति तदुद्देश्यां देवतामिन्द्ररूपामाह्वयतो-त्यर्थः । आह्वानप्रकारं दर्शयति सुब्रह्मण्योमितिषदस्त्रीलिङ्ग मिवादानपूर्वकं त्रिराह त्रिः पठेत् । कुतइत्यत्राह हि शब्दो हेतौ । यस्माद्देवाः त्रिसत्याः त्रीणि मनोवाक्काय-कर्म्माणि सन्त्यनृतवादीति येषां तेषा ते त्रिसत्या तस्मा-दतिप्रशस्तं त्रिराट्‌वान् कर्त्तव्यमित्यर्थः । हेतुवन्निगदोय-मर्थवादः । तेन ध्रुवं क्रियत इतिवत् न तु हेतुः । हेतुत्वे हेतुसापेक्षे च नैरपेक्ष्यलक्षणं न सम्भवेदिति निगदशेषमुपा-दायोपादाय व्याचिख्यापयामास प्रथमं तावदिन्द्रागच्छेति पदद्वयं व्याख्यातुमुपादत्ते इन्द्रागच्छेति । तदाचष्टे । यदाहेन्द्रागच्छेत्ये तदा अस्य प्रत्यक्षं नाम तेनैवैनं तदाह्वयति इन्द्रागच्छेति सुब्रह्मण्याय यदाह इदमेव अस्य इन्द्रस्य प्रत्यक्ष नाम तदा तेनैव एव प्रकृतत्वा इन्द्रादेश-विषयएनादेशः । एनमिन्द्रमाह्वयति पुनर्निगदशेषमाख्यातु मुपादत्ते हरिव आगच्छेति । हरिवः मतुवसोरुः सम्बुद्धौ छन्दसीति नकारस्य रुः। हरिव नाम तद्‌व्याचष्टे शुक्लकृष्ण पक्षौ वा इन्द्रस्य हरी हरिताख्यानामादित्यात्मकत्वादिन्द्रस्य तयोर्हरित्वप्रतिपादन हि यस्मात् ताभ्यां पूर्वपक्षापर-पक्षाभ्यामिदं सर्वं जगद्धरति कालात्मकेन नियच्छतीति

निगदमेषान्तर मुपादत्ते मेधातिथेर्मेषेति । तद्व्याचष्टे मेधातिथिं हरति ॥ काण्वायन कण्वस्य युवापत्यं मेधातिथि नामानमृषिमिन्द्रो मेषोरूपधरो भूत्वा जहार स्वर्गं निनाय किल तथा बह्वृचा आमनन्ति । इत्था धावन्तमद्रिवः काण्वं मेधातिथिं मेषोभूतोऽभियं नरः । अतो मेधातिथेर्मेषेतीन्द्रः सम्बोध्यते पुनरपि निगदस्यैव मुपादत्ते वृषणश्वस्येति मेनाख्यस्य वृषणश्वस्य काचिन्मेनका नाम दुहिता आस बभूव तां मेनकामिन्द्रश्चकमे ह कामितवान् मेना भवं वृषणश्वस्य सुतासौ इति नामान्तर मुपादत्ते गौरावस्कन्दिन्निति । तद्व्याचष्टे—इन्द्र किल गौरमृगो भूत्वा अरण्यादवस्कन्द्य स्कन्दिर्गत्यर्थः राजानं सोम सोमो वै राजा इति श्रुतेः पिबति स्म पपौ गौरावस्कन्दी चेति कर्मधारयसमासेन गौरावस्कन्दिन्निति इन्द्रः सम्बोध्यते नामान्तर मुपादत्ते—अहल्यायै जारेति । बहुलवचनात् षष्ठ्यर्थे चतुर्थी अहल्याया जार इत्यर्थः । तद्व्याचष्टे अहल्याय ह इन्द्रः किल मित्राया दुहिता मैत्रेयी तस्या अहल्याया जारः उपपतिरास बभूव तद्व्याचष्टे—कौशिक कौशिक, कुशिकगोत्रोत्पन्न कश्चित् ब्राह्मणः एनां प्रकृता महल्या मुपन्येति स्म ह इण गतौ लट् । सु इति परोक्षे लिट् उपनीत उपसर्गेण उपयन् उपगच्छन् उपयेमे किलेत्यर्थः । तस्या जारः सन् तद्गृहस्थाने तिष्ठतीति । कौशिकब्राह्मणेऽप्युपचारादामन्त्रते ॥

अथ नामान्तर मुपादत्ते गौतम ब्रुवाणेति । गौतम इति ह ब्रुवाण, । यद्वा गौतमरूपेण चरन् गौतम इति

मध्द्यमाने गौतमब्रुवाणः । ब्रुवति. कर्तरि व्यत्ययेन कर्मणि शानच् । तस्य सम्बोधनं गौतमब्रुवाणेति तद्दर्शयति, देवासुरा देवासुरा ह देवाश्चासुराश्च किं प्रयत्ताः परस्परं योद्धुमासक्ताः आसन् बभूवुः तानन्तरेण तेषां मध्य अन्तरान्तरेण युक्तइति द्वितीया गौतमो नाम ऋषिः श्रश्राम श्रम मुपाविशन् तं गौतम मुपेत्योपगम्येन्द्रः एव-मुवाच—असुरा भवन्तं बाधेरन् । अत इदैवास्माकं स्रग-चारी भूत्वा भवान् भवत्विति एवमुक्तवन्तमिन्द्रमृषिराह—अहमेव चारकपेण वर्तितुं नोत्सहे उत्साह न करोमीति ।

अथ गौतमवचनानन्तरमिन्द्रो ब्रवीति । अह भवतो रूपेण स्रग'सन् चराणीति तदनुमन्यते भवानिति पुनर्गौतमो ब्रवीति हे इन्द्र त्वं तथा येन प्रकारेण चरितुं मन्यसे तथा चरेति यथादिन्द्रः तथा चरेदिति शेषः । स इन्द्रस्तत्तदानीं गौतमोऽहमिति स्वय वदन् गौतमरूपेण गौतमइति अनैरुच्यमानो वा चचारेति । यत्तदेवाचरणमाह—गौतमेतीति । गौतमब्रुवाणेति पदस्यैकदेशः, एकदेशा दानप्रतीतेः. निगदशेष मुपादत्ते—इत्यहेति । हे मघव न्निन्द्र । इत्यहे एतावदहे अहे इत्यहेतिक्रान्ते सुत्यामागच्छ । परेद्युः सुत्या चेत् अ.सुत्यामागच्छेत्यादेशः कार्य' । तथा च जैमिनि' । श्व सुत्या मित्यौपवसथेऽहनि निर्दिशत् । सुत्याया आगमनेऽहनि तु अद्य सुत्या मागच्छेत्यादेशः कार्यः । तथा च द्राह्यायणः—अद्येति समानाहनि तदशयचष्टे तद्यथार्हेति उपलक्षणमेतत् ॥ तत्र यथार्हतो यथायोग्य मूयात्तस्यैव विवरणमित्यहेत्यत्र तावदहे इहे त्र्यहे देवाः

वो युष्मदर्थं हविषां पक्तास्मि तदा गच्छतेति । एवमेवानेन प्रकारेण यद्ब्रूयात्तद्देवेभ्यः सत्यामिव प्राहेति निगदशेषं प्रति हेतु सुपादत्ते देवा ब्रह्माण इति॥ देवा ब्रह्माण आगच्छता-गच्छतागच्छतेति निगदशेषः॥ हे देवा ब्राह्मणोऽहं ब्राह्मणा आगच्छत चिरुक्तिरदृष्टार्था । वा एतदयाचष्टे देवा हैवेति ॥ देवाः सुप्रसिद्धाः । यस्मादयमेव वा देवाः ।

अथ ह पुनः । एते वक्ष्यमाणा एव मनुष्यदेवाः ये ब्राह्मणाः परिहृताः कीर्त्त्यन्त इति शेषः । अथ हैते मनुष्य-देवाः इत उक्तं शश्रुवांसः श्रुतवन्तः अनूचानाः साङ्गवेदा-ध्यायिनो ये ब्राह्मणास्ते मनुष्यदेवाः । किं देवानां भाग-धेयं किं च ब्राह्मणानां तत्र दानेन प्रीणयितुं तानुभयाना-श्रयतीत्याह—आहुतय एव देवानां प्रीणातीति देवा-दीनां वस्वादीना मित्याहुय देवभागधेयं । मनुष्यदेवानां ब्राह्मणानां दक्षिणा गवादिरूपा भागधेय तस्यैव विव-रणम् । हि यस्मादाहुतिभि र्हि देवान्प्रीणयति यजमानः तथा मनुष्यदेवान् शश्रुवुषः श्रुतवन्तः शश्रुवण इति अस्मात् क्वसुः तस्य द्वितीयाबहुवचने वसोः सम्प्रसारेण कृते रूपम् अनूचानान् साङ्गवेदाध्यायिनो ब्राह्मणान् दक्षिणाभिः प्रीणाति प्रीणयति ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे षड्विंश ब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये प्रथमः खण्डः ।

---

## अथ द्वितीयखण्डः।

सुब्रह्मण्याशब्दो देवतानामधेयं सुक्तमन्त्रश्चेति जिज्ञासाया मुभयोर्नामधेयम् इत्याख्यायिकां प्रतिपादयितुं प्रथमं देवतानामधेयत्वं दर्शयति।

अथ यत्रेति अथ आख्यायिकोपक्रमलक्षणार्थं॥ यत्र देवेषु यजमानेषु यस्मिन् काले सुब्रह्मण्य एतन्नामा ऋत्विक् सुब्रह्मण्या माह्वयति। तस्मिन्नाह्वानकाले देवानां सम्बन्धिनं यज्ञ मसुररक्षांसि च देवयोनयः क्रूरकर्माणः। अतएव घातकाः गन्धर्वाः पितरो देवा असुररक्षांसि इत्येके अजिघांसन् हन्तु मैच्छन् किल। ततः किमित्यत्राह। एवं सुब्रह्मण्यो मित्यर्थं च लोपः। अतःपरं किमिच्छत्याह तानादित्यइति। तैरेव माहूय आदित्यः आदित्यात्मक इन्द्रः पर्जन्यः वर्षासु मेघः सन् तत्रापि पुरोवलाकः सर्वेषां पुरोगामी मेघो भूत्वा तान्देवानभिप्रेत्तामभिमुख प्रायच्छन् यज्ञ माप्यित्य तान् पविध्वंसकारिणो असुपानमन्या अच्छितया दृष्या विद्युता विद्योतनेन स्वप्रकाशनेनाहन् अच्छिसीत। एतत्तु यथास्थाणविचारत्वे नानभिहित मिति मन्तव्यम्। सुब्रह्मण्यायाः स्त्रीपुन्नपु सकत्वं विमर्शपूर्वं व्युत्पादयितुं संशय तावद्दर्शयति तदाहुरिति तत्र सुब्रह्मण्याख्या देवता विपयत्वे सुब्रह्मण्याः किं स्त्रीनपुंसकात्मकत्वमेव। सुब्रह्मण्येत्युत्तरं ब्रूयात् कथमेकस्य स्त्रीनपु सकात्मकत्वं तत्राह यत्पर्जन्येति ऋग्यजुः साम विचारार्थः श्रुत इति यथाह तर्हि तत्सर्वं मेव। ऋग्यजुः सामानि सर्वाणीति

सुब्रह्मण्योऽत्युत्तरं सुब्रह्मण्येति स्त्रीलिङ्गसाम्यादृक् सुब्रह्मण्या अयं सुब्रह्मण्या शब्दवाची मन्त्रः .निगदभूत एव भवति निगदो नाम यजुर्विशेषः। तस्मात् यजुर्यष्टार्थैः सामात्म-मकारिणः सामगाः सामभिः सह कुर्वन्ति। एवं पठन्ति— तस्मात्सामगैः पठ्यमानत्वात्तस्मात्सर्वमेव ऋग्यजुः साम चेति ब्रूयात्। निगद सामात्मत्वेनमवदिप्रपठ्यपि स्त्रीपुंनपुं-सकमित्यभिप्रायः एवं सुब्रह्मण्याह्वानं दर्शयित्वा ततो यत् कर्त्तव्यं तदाह तदा एतदिति सुब्रह्मण्यमाहूय तदा एत-यजमानं वाचयति वाचयेत् सुब्रह्मण्याधिष्ठिते रक्षणं सम-र्थानां अपहत्यै अपहननाय यजमानस्तुत्यर्थंवाचनीयं तत्सर्व-मेवेति ब्रूयात् यत् येनेन्द्रपर्जन्यः वर्षासुखो मेघः सन् पुरो-गामी भूत्वा अभिप्रेत् तान् देवान् तेन पुंरूप पर्जन्यात्म-कत्वेन पुमान् यत् येन वा ऽग्न्या असुरानवधीत् तेन च स्त्रीरूपहव्याऽग्न्यात्मकत्वेन स्त्री भवति यद्येन विद्युता अघ्नन् विद्युच्छब्दो नपुंसका स्त्रीलिङ्गोऽपि औणादिकः क्विप् बहुलवचनान्नपुंसकलिङ्गो भवतीति तेन नपुंसकेन विद्यु-दात्मकत्वेन नपुंसकं तस्मात् सुब्रह्मण्या सर्वं मेवेति भव तीति ब्रूयादिति सर्वमेवार्थे सुब्रह्मण्यायोगित्वविषयत्वेनापि स्त्रीपुंनपुंसकात्मकत्वं व्युत्पादयितुं विसर्गपूर्वकऋग्यजुः-सामात्मक दर्शयति यदाहुर्क्गिति तच सुब्रह्मण्यानाम धेयत्वेन सुब्रह्मण्याकिमृक् अथ यत्र मनूद्यामनूद्य व्याचष्टे ऋासि सुब्रह्मण्येति। हे सुब्रह्मण्ये त्वं सा प्रसिद्धा सर्व-मेवाक्पेन्द्रमूयासि भवसि तस्यास्ते पृथिवी प्रथमः पाद इति यजुर्नाम आह यजमानः पठेत्। तेन मन्त्र पाठेन

यान्येवासुररक्षांसि असुराश्च रक्षांसि च पृथिव्यां सन्ति तानि सर्वाणि एवापहते विनाशयति। एवमन्यदपि व्याख्यायते। तत्ते तव परोरजाः रजसः लोकात्परः उत्कृष्टो ब्रह्मणोलोकः स परोरजाः स एव पञ्चमः पाद इति। तदाह रजसः परं ब्रह्मणः स्थानं तदेतत् स्थान परोरजा इत्येतत्पर माह तथा सा प्रसिद्धा त्वं नोऽस्मभ्यं इषमूर्जितं तद्रसं चत्तुमस्त्वय इति यदाह तेन सा देवता अस्मै यजमानाय इषमूर्जं च धुदुग्धे किं च त्वं वीर्यं बलं वान्नाद्यं अन्नादिकं धनं च धेहि प्रयच्छेति यदाह तेन सा अस्मै यजमानाय वीर्यमन्नाद्यं दधातीति निगद प्रशंसा पूर्वक सुब्रह्मण्याह्वानस्य कालं दर्शयति। ब्रह्म श्रीयैं इति अयं सुब्रह्मण्या निगदो ब्रह्मणा ब्रह्म श्रीम यैम वेद वै न श्रीयते ब्रह्म येदं श्रयतीति वा ब्रह्मश्रीरेव। किञ्च सुब्रह्मण्येति यन्नाम प्रसिद्धं सामगैः क्रियमाणत्वात् यस्मादेव तस्मात्प्रातरनुवाक उपाकृते प्रातरारब्धेविसंस्थिते समाप्ते च यज्ञे प्रत्यहम् अहर्गणेषु सुब्रह्मण्यः सुब्रह्मण्या माह्वयति। प्रशंसापूर्वकं सुब्रह्मण्याय अनडुयुक्तस्याऽनसो दानं विधत्ते एव वै इति एव वै यजमानो ब्रह्माग्निं सुब्रह्मेन्द्रश्चाप्नोति योव मनडुह्नां एतदनः सुब्रह्मण्याय ददाति। यथोक्तलक्षणायाः सुब्रह्मण्याया वेदितारं प्रस्तौति सुब्रह्मण्योवै इति यः सुब्रह्म एवं यथोक्तप्रकारेण वेद जानाति सोऽस्य यजमानस्य यज्ञम् ऋग्यजुःसामात्मकवेदेनैव श्रिया पशुपुत्रादीनां समृध्या च समर्द्धयति समृद्धिं करोति। पुनरपि सुब्रह्मण्यां प्रशंसति अथोखल्वाहुरिति अथो इति अवान्तरवाक्योपक्रमार्थः

आहुः खलु प्रायश्चित्तविदः यच्च यद्यप्यवगत परिज्ञातं यच्चा-नवगतं यच्चानवगत मपरिज्ञात तस्य सर्वस्यैव प्रायश्चित्त-विदुषा सुब्रह्मणेन कृत सुब्रह्मण्याह्वान मेव प्रायश्चित्तं तस्मादेव विदं यथोक्तप्रकारेण ज्ञातारं ब्राह्मणं सुब्रह्मण्य कुर्वीत यजमानः अन्यथैवं विद कुर्वीतेति ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमा-ध्याये द्वितीयः खण्डः ॥ २ ॥

---

## अथ तृतीयखण्डः ।

अथ सवयज्ञस्य विशेषानि दर्शयितुं प्रथम प्रातः सवने विशेषं दर्शयति । एकच्छन्दः प्राय इति । प्रातः सवनमेक-च्छन्दः । एकं गायत्रमेव छन्दो यस्य तत्तथोक्तम् । बहि-ष्पवमानीयानामाज्यस्तोत्रीयाणां च ऋचां सर्वासां भवति अपि गायत्रच्छन्दस्कत्वात् तस्मात्तत एव पुरुष एकपाद्भवति कथमेकपात् पुरुषो द्विपात् सर्वं तत्र दृश्यते श्रूयते च द्वि-पाद्वै पुरुष इति अत इत्ययुक्तम् । यद्यपि द्विपात् पुरुष-स्तथापि पथि गच्छन् प्रथममेकपादमन्यत्र पुरोदेशे हरति प्रक्षिपति अन्येनैकपादेन भूमौ प्रतिष्ठति अत एकपात् पुरुष इति ।

अथ माध्यन्दिने सवने विशेषं दर्शयति त्रिच्छन्दा इति । माध्यन्दिनो माध्यन्दिनसवनसम्बन्धी पवमानः । त्रि-च्छन्दास्त्रीणि गायत्री बृहती त्रिष्टुबाख्यानि छन्दांसि यस्य तथोक्त अथवा. मापामस्य: एको मूत्रविसर्जनस्य हेतुरपरः

पुरीषविसर्ज्जनस्य चान्यो रेतोविसर्ज्जनस्य तयोः अर्वाञ्चौ रे-
तसो मूत्रपुरीषे इति श्रुतेः। तत्रैव विधानान्तरमाह द्वे
गायत्र्यामिति। माध्यन्दिने पवमाने गायत्र्यां गायत्र-
च्छन्दस्कायां द्वे सामनी गायत्रामहीयवनामनी क्रियेते।
तस्मात्तत एतद्वयं प्राणनमपाननं चेत्येव च द्वयमुत्तरेणोर्ध्व-
वर्त्तिना प्राणेन करोति पुमान्। यद्यपि रेतो विसर्ज्जनं
तृतीयमपि धर्म्माधर्म्मेण प्राणेन करोति। तथापि रेतोमू-
त्रयोरेकीकरणेन द्वयमपरेण करोतीत्युच्यते। तत्रैव विधे-
यान्तरमाह द्वे बृहत्यां सामनीति। बृहत्यां बृहतीच्छन्द-
स्कायां ऋचो द्वे सामनी रौरवयौधाजये नामधेये क्रियेते।
तस्मात्तत एव द्वयं प्राणनमपाननं चेति एतद्वयमुत्तरेणोर्ध्व-
वर्त्तिना प्राणेन करोति पुमान्। विधेयान्तरमाह एकां
त्रिष्टुभीति। तत्रैव त्रिष्टुभि त्रिष्टुप्छन्दस्काया ऋचि एकं
सामौशनाख्यं क्रियते तस्मात्तत एव एकैव नाभिर्म्मध्यवर्त्ती
प्राणः। नव वै पुरुषे प्राणा नाभिर्दशमीति श्रुतेः। सत्वेक
एव इतरप्राणवत्तस्य वृत्तिभेदाभावात् नाभेः किं कर्मेत्य-
त्राह। प्राणानामिवेति नाभिस्तु प्राणानां मूर्द्धा अधोभाग
वर्त्तिनामुभयेषामपि विधृतिर्विधारिका यथा करणानां
प्राणधारणादन्यकर्मास्ति तद्वदस्य कर्मान्तरं नास्ति किं तु
प्राणधारणमेकमेव कर्मेत्यभिप्रायः। एवं पुरुषविधस्य यज्ञस्य
प्रातःसवनम्। प्राणस्थानीयो माध्यन्दिन एव इत्यभि-
हितम्।

अथेदानीं तत ऊर्द्धं क्रियमाणानि चत्वारि स्तोत्राणि
किमात्मकानीत्यत्राह अथ यदेवेति। पुनस्ततो माध्यन्दिना-

त्यवमानादूर्द्धं यदेव स्तोत्र क्रियते। यच्छब्देन सर्वस्तोत्राणां सामान्येन निर्देशाद् यानि स्तोत्राणि क्रियन्त इत्यर्थः। तानि पृष्ठ मध्यदेहस्य पश्चाद्भागः तत्स्थानीयानि। कथमित्यत्राह बार्हतानीति। तानि पृष्ठानि बार्हतानि बृहतीषु भवानि। तत्र बृहद्रथन्तरयोर्बृहतीप्रमुखत्वात् श्यैतनौधसकालेयानां पुनर्बृहतीष्वेवोत्पन्नत्वात् किञ्च तान्येकगायत्रीकाणि। बृहत्यएव कीकसाः पृष्ठमभिसमायन्तीति तानि पृष्ठानि बार्हतानि वामदेवनामकस्यैकस्य साम्नो गायत्र्यामुत्पन्नत्वात्। यस्मादेवं तस्मात्परपुरुषपर्शवः पार्श्वास्थीनि। बृहत्य एवभूयस्यो बृहत्यः पार्श्वास्थीनि यास्तया बृहत्येव कीकसाः पृष्ठास्थावयवाः तत्स्थानीयाः पृष्ठमभिसमायन्ति पृष्ठस्थानीया एव गायत्रीं समागच्छन्ति। तत ऊर्ध्वं क्रियमाण किमात्मकमित्यत्राह अथ यदेव तत इति।

अथ पुनस्तती माध्यन्दिनः पवमानादूर्ध्वं यदेव क्रियमाण स्तोत्रं स आर्भव. पवमानः पुरुविधस्य यज्ञस्य मुख भवति मुखे सम्भूतत्वादित्यर्थः। मुख्यादीनां गायत्र्यादीनां प्राणादिरूपतामाह प्राणो गायत्रीति। मुखरूपे आर्भवपवमानेविद्यमाना गायत्री प्राणस्थानीया प्राणापानव्याना स्त्रिवृत्प्राणः॥ गायत्र्यपि त्रिपदेत्यतो गायत्र्याः प्राणसाम्यम् उष्णिक्ककुभौ श्रोत्रे अनुष्टुब्वाग्वाच् जातीया। वाग्वा अनुष्टुबिति श्रुतेः। जगती चक्षुः। यदेतानुक्तमनु दाहृतमक्षरपङ्क्त्यादिषु विकृतिषु क्रियमाणं छन्दः तत्किमात्मकमित्यत्राह पुष्टिर्यदन्यदिति। यदन्यदुदाहृतेभ्यो व्यति-

रिक्षमचरपद्मादि तत्पुष्टि गायत्र्यां मुख्यानामपि पुष्टि-हेतुः॥ छन्दोविभागं दर्शयित्वा इदानीं साम्नां विभागं दर्शयति हे गायत्र्यामिति। गायत्र्या ऋचि गायत्र सं-हिताख्ये सामनी क्रियेते तस्मात् पुरुषः प्राणेन द्वयं प्राणनं चापानन्नं च करोति तस्यैव विवरणं प्राणितिं चापानिति चेति ककुबुष्णिहौ हे अपि एकमेव छन्दः॥ इयोरप्यष्टा-विंशत्यक्षरात्मकत्वात् तत्र ककुभि द्वौ प्रथमतृतीयौ पादा-वष्टाक्षरौ मध्यमः पादो द्वादशाक्षरः। उष्णिहि तु प्रथम-तृतीयावष्टाक्षरौ तृतीयो द्वादशाक्षर इति विशेषः। तत्र हे सफपौष्कलाख्ये सामनी क्रियेते। तस्मात् पुमान् समान-मन्येन सच्छोत्रमेकेनैव श्रोत्रेन्द्रियेण द्वेधैव पुरस्तात् पश्चाच्च शृणोति। अनुष्टुभि हे श्यावाश्वान्धीगवनामकेस्तोमनी भवतः तस्मात् पुरुषोद्दयं सत्यं मनृतं वा करोति वदति। तस्यैव विवरणं सत्यं चानृतं च वदतीति। जगत्यां कावाख्यमेकं साम भवति। तस्याधिष्ठानं तदा अधिश्री हे सती समा-नसर्वेण लक्षणेन पुरस्तादायान्तं पश्यतः कारणे कार्योपचारः। ननु परात्पृष्ठत आयान्तं भावं येऽस्तु वा पुमान् पश्यतीति यथा श्रोत्रेण पृष्ठतः। शब्दं शृणोति तद्दि-त्यर्थः। अवशिष्टस्य यज्ञायज्ञीयस्य मूर्द्धात्मकत्वं दर्शयति अथ यदेवेति अथ पुनस्तयान्तो यथोक्तेभ्यो गायत्र्यादिभ्यः सामभ्य ऊर्द्ध्वं यत्साम भवति। तद्यज्ञायज्ञीयमूर्द्धा पुरुषवि-धस्य यज्ञस्य शिरःस्थानसमत्वात्। यथोक्तं यज्ञायज्ञीयविदः स्तौति। यः पुमानेवं यज्ञायज्ञीयं मूर्द्धानं वेद अङ्गानां मध्ये-

मूर्द्धा श्रेष्ठो भवति एतदेव विवृणोति अध इवेति । मूर्द्धा अन्यान्यङ्गानि अधइव वा एव पुरस्तादेव भवति खलु मूर्द्धा तु एषामुपरि एव पर्य्येव भवति यः पुमानेवं यज्ञायज्ञीयं मूर्द्धानं वेद अस्मादेव विदुषोन्येऽस्माज्ज्ञातयोऽध इव वा ऽधरा भवन्ति विद्वांस्तु स्वाना मुपरीव श्रेष्ठो भवति अत्र यज्ञप्रतिपादकस्य वेदस्यार्थतो ज्ञानं तत्र वचनश्च प्रशंसति यज्ञो वा अथ इति ॥

अथ शब्दो वाक्यादौ समन्वेति । यज्ञो वै यजनहेतुत्वा-द्यज्ञः अयमेव यज्ञ इति । यज्ञमाहुस्तद्विदो व्याहरन्ति । यः पुमानेवं यज्ञप्रतिपादनमेवं विदित्वा अनुब्रूते प्रवचनं करोति । एष वा अयमेव खलु जातः सफलजन्मा भवति अन्यस्तुजातोऽप्यावृतः इत्यभिप्रायः । किञ्च एष वायलुम-जरायुर्गर्भवेष्टनं तत्स्थं स्थानमाच्छादकं वेद तदर्थविषय-मज्ञानं जरायुशब्देन विवक्षितम् । तदव्यलुप्तं यज्ञस्य स तथोक्तः । किञ्चैष लेव मार्लिजीनः ऋत्विक्कर्मार्हः अनुष्ठानस्य ज्ञानपूर्वकत्वात् । अपि च यदा वैश्वेव काले यज्ञप्रतिपादक एतं वेद मनु ब्रूते ।

अथ इह तदेव खलु एष मनुब्रुवाणं भ्रूते गृणन्ति । असावन्ववोचत सम्यगनुवचन मकार्षीदिति प्रख्यातकीर्त्तिः भवतीत्यर्थः । यच्चैव यदाय विख्यातो भवति तदा खलु सा न वक्ता जायते पुण्यजन्मा भवति यज्ञेषु यज्ञप्रदेशेषु गायत्र्यादीनां छन्दसां न्यूनाधरत्वमस्तु । तत्र प्रात सवनसामान्येन गायत्र्या ऊनाक्षरत्वं स्तौति ऊनाक्षरा इति । प्रातः सवने गायत्री ऊनाक्षरा तद्यथा अग्निमव

मानि उपास्मै गायतानर इत्येषा गायत्री ऊनाक्षरा प्रातः सवने प्रजानां प्रजात्यै। पवमानायेन्दव इति द्वितीयपादस्य सप्ताक्षरत्वात्तथा तत्रैव दविद्युतत्यारुचेत्येषा गायत्री न्यूनाक्षरा। तथा आज्येष्वपि होतुराज्ये तन्त्वासमिद्भिरङ्गिर इत्येषा गायत्री। तत्र बृहच्छोचायविष्ठेति: तृतीयः सप्ताक्षरः। आनोमित्रा वरुणेत्ययं पादः सप्ताक्षरः अच्छावाकस्यापि इन्द्राग्नी आगत सुतमित्येषा गायत्री। तत्र गीर्भिर्नभोवरेण्यमिति द्वितीयः पादः सप्ताक्षरः एवमन्यदपि उदाहार्यमेतत्प्रायद्वः ऊनाक्षरत्वं प्रजानां प्रजात्यै प्रजननाय भवति। तथाहि लोके प्रजाः सर्वाः ऊनादिव गुह्यप्रदेशात् न्यूनादेव देशात्परिच्छिन्नदेशाः प्रजायन्ते। एवं सामान्यतः प्रातः सवने गायत्र्या न्यूनाक्षरत्वं प्रशस्येदानीं तत्रैवामहीयवं गायत्रीं यौधाजयस्य साम भवति। ऊनाक्षरा इति आमहीयवे साम्नि गायत्री न्यूनाक्षरा। तद्यथा उच्चातेजात मन्धस इति एषा गायत्री न्यूनाक्षरा दिविसद्भूम्याददइति द्वितीयस्य सप्ताक्षरत्वात्। तथा एनाविश्वान्यर्य इत्येषापि आद्या द्वितीययोः सप्ताक्षरत्वात् प्रजानामित्यादि 'पूर्ववत्। माध्यन्दिनसवने पृष्ठेषु वामदेव्ये यजमानलोक एव स मध्ये हि यज्ञस्य यजमान इति। ऊनाक्षराद्इति। अभ्यैयानाक्रान्त एव हि देशे यजमानस्तिष्ठति न त्वन्यैराक्रान्ते अतस्तत्स्थाने गायत्र्या न्यूनाक्षरत्वं गुण एव या वामदेव्यस्य यजमान स्थानत्वोपपादनम्। तथाहि यज्ञस्य मध्ये वामदेव्यं क्रियते स यजमानस्य दात्मनो यज्ञस्य मध्ये एव वर्ततइति

तृतीयसवन आर्भवपवमाने संहितसाम्नि गायत्रा न्यूनाक्षरत्वं प्रशंसन्ति ऊनाक्षरा इति। संहितनामधेये साम्नि प्राणापानयोः परिरोध या धनं न प्रतीयात् न कुर्य्यादित्यर्थः। तस्मादिदं न हि विष्टदेतकरकाम्हि नाल इराध्यै मावर्त्तेदभीष्टा उपहपानादाद्दीयेतेत्यर्थः। पूर्वमेव करकादिकं दृष्टाद्यपनयनायोपधमे तथा वायोः। सञ्चरणा-दृष्टपनयो भवति तथापि न्यूनाक्षरत्वमेव यज्ञायज्ञीयं प्राणानामुत्सृष्टौ गायेदित्यर्थः। गायत्री न्यूनाक्षरा पर्य्यि-राधीमधीमित्यथ तृतीयस्य समाक्षरत्वात् यदेतं न्यूनाक्षरत्वं गायत्र्यास्तत् प्राणापानयोश्चारे सञ्चारणे तन्निमित्त मेव भवतीत्यर्थः। तथा हि प्राणापानौ ऊनादिव परिच्छिन्ना देवता सा देशानुचरतः सञ्चरतः अतो गायत्र्या न्यूना-क्षरत्वात्तयास्तमित्यर्थः। तत्रैव यज्ञायज्ञीये सतो बृहद् गायत्र्या न्यूनाक्षरत्वं स्तौति। ऊनाक्षरं यज्ञायज्ञीयमिति। यज्ञायज्ञीय साम ऊनाक्षरं तदीयप्रगाथे ऊर्ज्जोनपात-मित्येषा सतो बृहती न्यूनाक्षरा तृतीयपादस्यैकादशा क्षरत्वाच्चतुर्थस्य समाक्षरत्वात् तत्स्तत्र गीयमान यज्ञाय ज्ञीयं न्यूनमित्युच्यते तदेतत् न्यूनत्वं प्राणानामुत्सृष्ट्यै भवति। एवं प्रकारा एव यत् प्राणानां गतिर्नाम तत्र ऊनाक्षरत्वं गुण एव तदेतल्लोदाहरण मुपपादयति यो हि पूर्णमिति। पाहि य. पुमान् योगेनालाद्यन्तर्गतत्वडपनयनायोदकपूर्णं करकादिकं ययुपधमेद्यदि च तदुपधन् प्रतीयात् प्रति गच्छेत्। न हि उपाध्माता विपतत् विपन्नो भवति व्यर्थ-प्रयासो भवतीत्यर्थः यथोपध मनक्षरत्वं स्तौति ब्रिष्वपि

सवनेषु गायत्र्या न्यूनाचरत्वं प्रशंसति तदाहुरिति। इति तत्रैव सर्वमाहुर्ब्रह्मवादिनः सवनानामेव खल्वेते गायत्र्यादिरूपाः प्राणा उद्गाताः सप्तारत्नीनास्तिष्ठन्ति तेषां सवनसम्बन्धिनां गायत्र्यादीनामूनाचरत्वेन प्राणानामुत्सृष्टिरेव भवतीति।

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
मद्विमन्नाह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये
तृतीयः खण्डः॥ ३॥

---

## अथ चतुर्थखण्डः।

ज्योतिष्टोमे सुत्येहनि प्रातरनुवाको मुखं विश्वरूपगान विधातुं तत्र कश्चित् प्रकारमाहो विधत्ते अध्वर्य्यवित्याहेति हे अध्वर्य्यो मे मह्यं उद्गात्रे मा मनिवेद्य वेदन मामन्त्रण मकृत्वा होवे प्रातरनुवाकं मक्ष मा श्रोपाकरोः उपाजरणं मावार्षी रित्यध्वनाध्वर्य्युं प्रत्याह वदेदित्यर्थः इति शब्दोऽयाक्लरवाक्यपरिसमाप्तिद्योतनार्थः तथाच ब्राह्मणं। न मानमामन्त्र्य प्रातरनुवाक मुपाकुर्य्या इत्यध्वर्य्युं ब्रूयादिति। ततः किमित्यत आह सोध्वर्य्यु. प्राहेति। सएव सुब्रह्मण्योक्तोध्वर्य्युः प्राह। प्रातरनुवाकोपाकरणात् पूर्वं मेन माययेदित्यर्थः। ततः किं कुर्य्यात् उद्गातेत्यनाह। सह्रत इति। स उद्गाता ह्ततोऽध्वर्य्युणामन्त्रित. सन् हविर्धानमण्डप गच्छेत् गत्वा स पूर्वया द्वारा हविर्धानमण्डपस्य पूर्वेण द्वारेण हविर्धाने सोमात्मकस्य हविष आधार भूते द्वे शकटे

प्रपद्यते प्रपद्यत अतः हविर्द्धानद्वयं प्रासस्थ उद्गातुः सनियमं विश्वरूपगान विधत्ते मद्दक्षिणस्येति । उदङ्मुखो मित्रवर्ग मुपविश्य विश्वरूपाः विश्वरूपशब्दवती पुङ्क्षेवायु शतपदो मित्रे तस्यां पङ्क्तौ गायत्री प्रगाथ प्रगाथनेनोत्पन्नानि स्तोत्राणि गायति । तथाच द्राह्यायणः पूर्वया द्वारा प्रपद्योत्तरेण हविर्द्धाने पूर्वेण चक्रे उदङ्मुख उपविशेत्तूष्णीमिति । अस्यार्थः । पूर्वया द्वारा हविर्द्धानं प्रपद्यान्तरेण हविर्द्धाने शकटयोर्मध्ये पूर्वेण चक्रे चक्रयोः पुरस्तादुदङ्मुखस्तूष्णीं स्तोत्रधर्म्ममात्र मास्ते सम्भवत् कृत्वा उपवेशनं हि त्वोपविशेदिति विश्वरूपगानविधिर्न नित्यः षोडशिग्रहवत् वैकल्पिकः तथाचोपपादित द्राह्यायणेन पूर्वोत्तरपक्षोपन्यासेन विश्वरूपाणां गानं यजमानेनोक्तः प्रत्याचक्षीत । चतुष्टोमस्तोमसम्पदतिरेकादग्रहग्रस्ताभावाच्च चमतोऽवर्यीग्रहः प्रातरनुवाकः शाम्व मासाश्च न सम्पत्कोपो यथान्यैः परिसामभिर्गायेतिचैव ब्रूयादिति अस्यार्थःयजमानेन चोदितऽप्युद्गाता विश्वरूपाणा गानं प्रत्याचक्षीत न कुर्य्यादन्यथा चतुष्टोमस्याग्निष्टोमस्य स्तोत्रः स्तोत्रीया अतिरिच्येरन्निति। किञ्च प्रातरनुवाक मेकसप्तत्रासामभि विश्वरूपाभि सम्पन्नत्वादिवाह ग्रहोला चमसयोर्वीय स्तोत्र मुपाकुर्य्यादिशं सपत्नीति यद्वात् । अन्त्ययोरावश्यकत्वात्तयोरत्राभावात् । विश्वरूपगानं न कुर्य्यादिति गायननिषेधः । अथ तदनुपादनवसतीवर्य्येव ग्रहः । प्रातरनुवाक एव शस्तमासामिति विश्वरूपाभिः सम्पन्नत्वादिरोधोपि नास्ति सोमस्य तद्देवता । नां वायुरेरभावात् । यथान्यैः सम्पद्विरोधो नास्ति

तद्दत्तदीयगानेन तत्र यजमाननियोगः प्रधानं किन्तु यथो-
क्तग्रहणस्तक्रमिः। तथा सति यदिच्छेत् तर्हि यजमानो
नानुज्ञोऽपि गायेदिति विवक्षित मिति। असौ विधिनिषे-
धयो रुभयोरपि सूत्रकारेण दर्शितत्वादैकल्पिकोऽयं विधि-
रित्यवगम्यते। विश्वरूपागान प्रशसन्ति। क्षत्रं वै इति
प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्। क्षत्रं वै देम यागरक्षा-
हेतुत्वात्। अप्रगीतसाध्या स्तुतिः शस्त्र। विद्यागमम्यहेतु-
त्वात्। यदि विश्वरूपां गायेत् अस्य यजमानोयक्षत्रेण
विश मनुपुष्टिं मनुसृज्य वीर्य्य मनुवत्सनि सन्ततगामिनां
करोति। अथो अपि च स्तुतशस्त्रयो रेव समारम्भाय सम्य-
गुपपत्ताय एव व्यवस्संसाया विच्छेदासत्त्वै विश्वरूपागानं
भवति। विश्वरूपागानस्य कर्त्तृविशेषादर्शनात्परीक्षया
कर्त्तव्यतां द्रढ़यति एतद्ध स्माहेति। मित्रयुसुतो ग्लावो
ग्लावनाम कश्चिदृषिः एतद्वक्ष्यमाण माह उक्तवान् किल
अद्य प्राङ्क वै प्रातरेव पापवसीयसं व्याकरिष्यामीति
श्रेष्ठं मम्य मिदं श्रेष्ठमिति विभागं करोतीति। एवं ब्रुहः
स ग्लावः उपवसथ्ये अग्नीषोमीयेऽहनि अपररात्रे प्रातर-
नुवाकात् प्रागित्यर्थः। सदस्येवोदङ्मुख आसीन उपविष्टो
विश्वरूपां गायति आसीत्। सदसीत्येे तत्सामीपस्थहवि-
र्द्धानमण्डप लक्षयति। स पूर्वया द्वारा हविर्द्धाने प्रपद्यत
इति पूर्वत्र विद्यमानान् सदसि हविर्द्धानयो रभावाद् विश्व-
रूपागानेन ज्योतिर्गानं दर्शयितुं कश्चिदुपवादं दर्शयति।
तदुपवाद इति तत्रोऽपवादोऽन्योऽन्यसंवाद कश्चिदस्ति
तस्यैव प्रदर्शनं हे अध्वर्य्यो स्तुतं स्तोत्र मनुहोता प्रातरनुवा-

केन शस्त्रेण किं प्रशंसीत शसन मकार्षीत इत्येवमुपक्रम्य इति'। पृष्ठतोऽध्वर्यु ब्रूयादस्माभि कर्म्म तदह मकार्षं अकारिषं तस्ते तार पृच्छतेति तेन प्रत्युक्ता उपवक्तारो वदेत् होत. त्वं स्तुत स्तोत्रं अनुहोता प्रातरनुवाके शस्त्रेण किमशंसदिति तेन दित सन् उद्गाता ब्रूयात् यस्मम कर्म्म तदह मकार्षं तस्मै प्रदर्शन यश्चेय सदगासिष तत: किमित्यत्राह तस्मेह्युरिति। तमुद्गातार चेदुपवक्तार मेव ब्रूयु' तेन प्रसिद्धेन हि उद्गात. तमो वै तम एव ज्योतिर्विरुद्ध मेव साम स ब्रूयादिति। स एव तै: पर्य्यनुयुक्त. उद्गाता एव ब्रूयात्। तेन प्रसिद्धेन येन ज्योति' सूर्य्यात्मक तेजो ज्योति' प्रकाशक मभूत् तेन येन कद्मपि ज्योतिर्निरथ्यक्तास्तरा भवति। यद्वा नरकशब्देन तदधिष्ठानानि लक्ष्यन्ते। किञ्च तेन येन गायत्री ज्योति: किञ्च तेन येन छन्दोमात्र ज्योति: तथा तेन येन सामापि ज्योति. तथा तेन येन तेजो वै सामरूप्यमिति श्रुते.। तदपि साम्नान्तर्विशिष्टता सूर्य्योपलक्ष्यते किं बहुना तेन येन सर्व्वापि देवता ज्योतिरभवत्। तज्ज्योतिर्ज्योतिराख्य नाम सामेत्याह समाविष न तमइति किञ्च युष्मासु प्रति यजुषु युष्मानेव पाप्मना पापरूपेण तमसा विध्यानि बाधन्त युष्मानेवाऽस्मान् करोमीत्याह ब्रूयात्। तत्रैव सति तान् एव यजून् पाप्मनैव तमसा विध्यतीति एव मपि पुरा कृत्वा विश्वरूपागान पक्षे ज्योतींषि गायेदित्यर्थ:। यस्मूर्त तद्द्वितीय इति न्यायेन मुख्यविधिकल्पनस्य मुख्य त्वात् अत एव द्राह्यायणो विश्वरूपागानपक्षे ज्योतिर्गान तस्य कामप्रकार च दर्शयामास विश्वरूपाचेद्गायेज्ज्योतीए·

थपि गायेत्यरिष्विते प्रातरनुवाके अपोनप्त्रीयं नाम सूक्तं पुरा तस्माद्धोतार मारमयित्वाग्रयणस्य यान् हिङ्कारं यवित्रं धारयदाम्नावं वा प्राप्य पुरा स्तोमयोगादग्निर्ज्योतिर्ज्योति रग्नि रिन्द्रोज्योतिरिन्द्रः सूर्य्योज्योतिःज्योतिः सूर्य्य इत्येतेषु पदेषु त्रिस्त्रिरेकैक मभ्यासं मनसा गायत्रं गायेदिति। अस्यार्थः विश्वरूपां गायेदिति तत्रार्थं होता प्रातरनुवाकाख्ये शस्त्रे समापिते सति तेनैव यत्तव्यम् अपोनप्त्रीयं नाम किञ्चित् सूक्तमस्ति तदनुवचनात् पूर्वं होतार मेत्युपा का सतनि ज्योतीष्यपि गायेत् अथवा आग्रयणं ग्रह्णतोध्वर्य्योर्हिङ्कारवेलायां दृयापवित्रं धारयन् तानि गायेत्। अथवा आम्नावं वहिष्पवमानस्तुतिदेशं प्राप्य स्तोमयोगात् पूर्वमग्निर्ज्योतिर्ज्योतिरग्निरित्येव प्रथमः पादः। इन्द्रो ज्योतिर्ज्योतिरिन्द्र इति द्वितीयः। सूर्य्यो ज्योतिर्ज्योतिः सूर्य्य इति तृतीयः। एवमेतान् त्रीन् पादान् प्रत्येकं त्रिरभ्यस्य प्रथमे पादे त्रिरभ्यस्तेन मनसा गायत्रं निधनं गायेदेवमुत्तरयोरपि विश्वरूपागानाश्रयस्य ऋचः प्रथमं पाद मनूद्य व्याचष्टे शुक्रेवाचमिति। शतपदीवाचं शुक्रे साम्ना युनज्मीति। यदाह तु वाग्वाव वागेव शतपदी बहुपादयुक्ता ऋगिति शतपदीति गायत्र्यादिभेदेन बहुपादोपेता। तत्तदा तया शतपदा आत्मानं यजमानञ्च प्रातः सनिं सनिदानं बहुदानं योद्दाता करोतीति। द्वितीयपाद मनूद्य व्याचष्टे। गायेति सहस्रसनिस्तोभादिदन बहुवर्त्तनि साम गायेदिति साम वै सहस्रवर्त्तनि तदा तेन साम्ना आत्मानञ्च यजमानञ्च सहस्रसनि

मेवोद्गाता करोतीति । तृतीयं पाद मनूद्य व्याचष्टे गायत्रं चेट्भमिति । चतुर्थं पाद मनूद्य व्याचष्टे विश्वारूपाणीति विश्वा सर्वाणि रूपाणि निधनानि संभृतानि सवनानि । सभृते. संभृतानि सम्पादितानि तेष्वेव समस्तकार्य्यकरणादिति । यदाह तत्तेन विश्वमपि सर्वमेव वित्तमात्मने यजमानाय च सम्भरति । उद्गाता सम्पादयति पञ्चम पाद मनुवदति देवा औंवा९सीति देवा इन्द्रादयस्त एतानि सवनानि औकाऽ९सि चक्रिरे सतवन्त इति वेदितारं प्रशंसति औकोहास्मिविति । यः पुमानेवमुक्तप्रकारेण विश्वरूपागानं वेद अस्मिन्यज्ञे ज्योतिष्टोमादिः उक्तस्थान मेव कुरुते तत्रैव प्रतितिष्ठतीत्यर्थः । पुनराख्यायिकया .विश्वरूपागानं स्तौति असितमृगाहस्मेति । पुरा पूर्व्वं * कश्यपाः तद्गोत्रोत्पन्ना ऋषयः असितगुणः सन्तो मृगा उद्गायन्ति स्म खलु ।

अथ पुनस्तत्पुनानं सामवेदाध्यायिनम् औद्दालकि मुद्दालकाख्या पत्यं कुसुरुविन्दनामानमपि ब्राह्मणः ऋत्वि दुद्गीथाय उद्गीथ भक्ति गानाय च मन्द्रे ववृिरे वृतवन्तः । ततस्ते ब्राह्मणा ऊचुः । परस्परमेव अवोचन् किन्त अथ कुसुरुविन्दो नोऽस्माकमप्रणीरित्यर्थः । ऋत्विकर्म्मपर्य्याया दतएव इन्तेति प्रश्ने । इमं कुसुरुविन्दं अनुव्याहराम: वयं किञ्चित् प्रतिहाम इति ते पुनरनुव्याहरिष्यन्त. सन्तस्त मुपनिषेदुः समीप प्रापाः स पुनस्तेषामभिप्राय ज्ञात्वैव मुवाच । हे ब्राह्मणाः वो युष्मभ्य नमः नमस्कारोऽस्तु । प्राह्णे वै प्रातरेवाह यजनमस्थापय परिसमापयामि यथा

तु वै खलु एतस्य धामस्य शीर्ण कीटराद्युपहतं वा गृहादिकं अनुसमादधे किञ्चित् समर्थः समाधत्ते । एव वै वदत् सेवाहं यज्ञस्य वैकल्यपरिहाराय अर्थिमानेन यजमानेनाधि करिष्यामि नियुक्तोऽस्मीति तेनोक्तास्ते ब्राह्मणा स्तस्मै कुसुरुविन्दाय मनसि स्थितमभिप्रायजात कः कश्चिदवोचदिति तुवाणाः हिं कृत्य हिकार कृत्वोचस्तु रिति इति शब्दो वाक्यसमाप्तिद्योतनार्थः ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

## अथ पञ्चमखण्डः ।

वाङ्मनसः स्वरूपमिदं खलु विश्वामित्रायैव कथमुवाच । वसिष्ठाय ब्रह्मोक्तवान् कथ चोक्तमिति । विश्वामित्राय मन इति । एव ब्रह्मेति वसिष्ठाय तद्वैतस्मादेवैतद्ब्रह्म वासिष्ठं वासिष्ठस्यैवावधारण स एव ब्रह्म विन्दति एव वाङ्मनसयोर्वेदितारं वासिष्ठश्च प्रशस्येदानीं तदिदं वासिष्ठं वा ब्राह्मण कुर्वीतेति विधत्ते अपि हैवमिति । अपि ह स्तत एव एवम्विद वा यथोक्त प्रकारेण वाङ्मन सयोर्वेदितारं वा वसिष्ठगोत्रोत्पन्नं वा त्रयीविद वा ब्रह्माणं कुर्वीत । सोदाहरण वाङ्मनसयोर्यज्ञनिर्वाहकत्व दर्शयति तद्यथेति । तत्तेषं सति यथा लोके कश्चित्समर्थः उभयवर्त्तनिना रथेन उभौ वर्त्तन्यौ चक्रे यस्य तेन रथेन यां

या दिगन्तुं प्रार्थयते तां तां दिशमुख प्राप्नोति एव तथैवतभयवर्त्तनिना उभे वाङ्मनसे वर्त्तन्यौ चक्रस्थानीये यस्य तेनैतेन यज्ञेन य काममिष्टं पदार्थं कामयते यजमान' त काममभ्यश्नुते अभित' प्राप्नोति। तथा च बहृच ब्राह्मणे पठ्यते—

अथ केन ब्रह्मत्व क्रियत इति त्रयोविद्ययेति ब्रूयात् अय वै यज्ञो योय पवते तस्य वाङ्मनस वर्त्तन्या वाचा हि मनसा च यज्ञो वर्तत इति। अथाहेति अथेति ब्रह्म कर्त्तव्य विष्णुपक्रमे प्राणानामिन्द्रियाणां मध्ये मनोयद्य स्वार्द्धभाक्‌वे तद्वर्त्तन्यात्मकत्वात्तथासति स ब्रह्मा यदावा व्याह इति वाग्विसर्जनं करोति तत्तदा वाचि मनः प्रतिष्ठापयति वाङ्मनसे एकीकुर्य्यादित्यर्थ.। ननु पूर्वकत्वा-द्वाक्यप्रहते। तत्रैव सति यथा कश्चिदेकवर्त्तनिदा एक चक्रेण रथेन न काचन काममपि दिश न यश्नुते न प्राप्नोति। यावदिति ऋग्यजुःसामभिर्होतृधर्य्युद्गातारो यावत्त कर्म्म कुर्युः। तावत्तावन्तं काल ब्रह्मा वाचंयमो वाग्यमनवान् तुमूपेङ्गवेत् । अत्र विशेष माह सूत्रकारः—प्रणीतासु प्रणीयमानासु वाच यच्छेत्। आप्राना मिमो चनात्तास्वेव प्रणीयमानास्वाह विष्कृतस्तन्वयजुपयाआ समिध प्रस्तानीयायादिति या यत्र वा स्वयुर्वैकचो चेष्टेता यत्र वा न चेष्टेतां वाग्यत प्रायस्त्वेय स्यादिति। अस्यार्थ' प्रणीता प्रणयनमारभ्य तद्विमोचनपर्य्यन्तम् ।

अथ वा प्रणीताप्रणीयमानासु आरभ्य आह विष्कृत. हविष्कृदेहीति समेषपर्य्यन्तं । यद्वास्तं यजुरारभ्य वा

समिधः प्रस्थानीयायाः प्रस्थान मनुयाजप्रचारस्तदर्था समिधस्थानीया तस्य आधानपर्य्यन्तम् अथ वाध्वर्युहौत्रो: कर्म्माभावेऽपि ब्रह्मवचो न कामचारः किन्तु तत्रापि ब्रह्मा प्रयेष वाग्यतः स्यादिति ऋग्वेदविहितकर्मन्यूनातिरेके प्रायश्चित्तत्वेन ब्रह्मणा कर्त्तव्यं व्याहृतिहोमं विधातुमादौ वेदत्रयसारत्वेन च व्याहृतीः प्रशंसन्ति प्रजापतिर्वा इति। प्रजापतिर्ब्रह्मा इमान् प्रसिद्धान् त्रीन्वेदानसृजत। तेन सृष्टास्ते वेदा एनं प्रजापतिं तां धिलक्षप्रीणयन् ततः प्रजापतिस्तेभ्यः सारजिघृक्षया तानभ्य पीडयत्तेभ्यः पीड़ितेभ्यः भूर्भुवस्वरिति व्याहृतित्रय मक्षराणिसनिरगच्छेत्। तस्य विवरणम्। ऋग्भ्यो ऋग्वेदाद्भूरित्यक्षरत्वव्याहृतिरूपस्य। स सोऽयं भूलोकोभवन्। यजुर्भ्यो यजुर्वेदाद्भुव इत्यक्षरस्य रसोऽन्तरिक्षलोको भवेत्। सामभ्यः सामवेदात् स्वरित्यक्षरसः स्वर्गोलोको भवेदिति। प्रथमं व्याहृतिहोमं सस्तुतिकं विधत्ते। तद्यदिति। तत्र यदि ऋग्वेदविहितात् कर्म्मणः उल्वणं न्यूनमधिकं वा होत्राकं वा होत्रादिभिः क्रियेत। तत्तर्हि गार्हपत्यमग्निं परेत्य भूः स्वाहेत्यनया व्याहृत्या जुहुयात्। अयं वै अयमेव भूर्लोको गार्हपत्यं अयमेव लोकऋग्वेदः। तद्वैतेनैव होमेन इमं लोकञ्च ऋग्वेदञ्च स्वेन स्वकीयेन रसेन सारेण समर्द्धयति समृद्धं करोतीति। द्वितीयव्याहृतिहोमप्रशंसां विधत्ते अथ यदीति। अथेत्यवान्तरवाक्योपक्रमे यजुष्टो यजुर्वेदविहितात् कर्म्मणो यद्युल्वणं न्यूनमधिकं वा अध्वर्य्यादिभिः

क्रियेत तर्हि अन्वाहार्य्यपचनमग्निं परेत्य भुवः स्वाहेति । ब्रह्मा जुहुयात् । अन्तरिक्षलोको वै अन्तरिक्षलोकएवान्वाहार्य्यपचनः अन्तरिक्षलोकएव यजुर्वेदस्तद्देतेनैव होमेन अन्तरिक्षञ्च यजमानं च स्वेन सारेण समर्द्धयति ॥ तृतीयव्याहृतिहोमं प्रशंसन् विधत्ते अथ यदीति । स्पष्टमेतत् । एवं विशेषेण प्रायश्चित्तं विधायेदानीं साधारण्येन प्रदर्शयति अतीवाव इति । अतीवाव अपिवा यतमस्मिन् कर्त्तुमस्मिंश्चित् कर्म्मणि उल्बणं न्यूनमधिकं वा क्रियेत तदा सर्वदेवात् पर्यायक्रमेण जुहुयाद्व्याहृतिभिर्ब्रह्मा जुहुयात् । तथावास्य यजमानस्य यज्ञ अस्त्रवः अन्वाक्षतो भवति किन्तु स्वर्गाक्षतः यथोक्तमार्गेणैव क्षतो भवति ॥

हविषा स्कन्दने पात्रादीनाञ्च भेदने प्रायश्चित्तं विधातुमादौ दोषं दर्शयति अधः स्कन्नाद्देति । अथ पुन स्कन्नादविष. स्नवादा भिन्नात् पात्रादीनां. भेदादा परस्तेधा त्रि.प्रकारेणेत् क्रमति कथं देवान् दिव यद्धिष्ठितन्दिवि लोके चेति तृतीय गगनं त्रिलसख्या पूरकत्वात् । एव मन्यदपि वाक्ये यत्र प्रायश्चित्तं ॰विधत्ते तद्भिमर्शेदिति देवान् दिवञ्च यज्ञो गादुदगमत् । ततस्तत्कारण मा मान्द्रविणं तद् यज्ञफल अष्ट आप्नोतु । एवमन्यदपि व्याख्येयम् । देवानित्यारभ्य यत्र क्षच यज्ञो गात्ततो मा द्रविण मद्वित्यन्तेन मन्त्रेण स्कन्दं हविर्भिन्नं पात्रादिकञ्चाभिमृशेत् । तद्देतेनैवाभिमर्शनेन आत्मानञ्च यजमानञ्च स्वेन रसेन समर्द्धयतीति । यत्तु हविषा वैष्णवं वारुणं वांपा मुपनयनं प्रायश्चित्तत्वेन विधातुं तदर्थवादत्वेनेदमाम्नायते

वारुणी वा इति वरुणो वै अपाम्पतिः वरुण एव एतस्मिन्न-
त्ययः एवं विद्वा तृणपर्षयति स्थापितवानिति ।

अथ प्रायश्चित्तं विधत्ते यद्यप्त इति । यद्यदि यज्ञे
उत्वणं क्रियते तर्हि परोरजसेत्यादिना ऋचं हविर्भिन्नमप
उदकानि तस्मिन् हविषि उपनिनयेत् पाकवेलायां हविरुद्-
गच्छेदेतेनैवार्या उपनिनयेनात्मानञ्च यजमानञ्च स्वेन स्वेन
रसेन समर्द्धयतीति । यदपेन यज्ञस्य विष्णोः समर्पितत्वात्
वैष्णवानां वारुणानां वा पात्राणामुपनिनयने कृते यज्ञः
समाहितो भवतीत्यर्थः । अस्य मन्त्रस्यायमर्थः । ययोर्विष्णु-
वरुणयो रोजसा तेजसा च रजांसि लोकाः स्कभितानि
यथावस्थापितानि । किं ययोभिः वीर्यैः तैर्वीरतमा अति-
शयेन वीरौ । तथा शविष्ठा शविष्ठौ । अतिशयेन बलवन्तौ ।
अपि ययोभिः सहोभिरन्यदीयैर्बलैरप्रतीता अप्रतिगतेवत्येते
ईश्वरौ भवतः यत्पतिरैश्वर्यकर्मापूर्वं इतौ पूर्वं प्रथममाम्ना-
तव्यौ विष्णू वरुणावुभयत्र द्विवचनं परस्परसाहित्यापेक्षया
विष्णुवरुणावित्यर्थः । अयगन् यज्ञोगमत् । गमेर्लुङि
मोनोधातोरिति नकारे कृते रूपं स्वाहा सुष्ठु हुत
मस्त्विति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थ प्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये
पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठखण्डः ।

विराजोऽतिरेके अनूनतायां प्रायश्चित्तं दर्शयितुमाह—

तद्धेति। तदेतदसमाणं विद्वानाह सम्यगुक्तवान् किल यावद्धा यावत्काले होता ऋचा करोति शस्त्रादिकं पठति तावद्धोतर्य्येव यज्ञस्तिष्ठति यावदेवाध्वर्युर्यजुषा यजुर्वेदविहित कर्म्म करोति तावदध्वर्युष्वेव यज्ञस्तिष्ठति। यावदुद्गाता साम्ना स्तोत्रादिकं पठति तावदुद्गातर्य्येव यज्ञस्तिष्ठति। यत्र यस्मिन् काले उपरता होत्रादयः कर्म्मरहितास्तिष्ठन्ति तावत् ब्रह्मण्येव यज्ञस्तिष्ठतीति। अस्त्वेवं किं तत इत्यत आह तस्मादिति। यस्मादेव तस्मात्तस्मिन्नवसरे होत्रादीनां व्यापाराभावकाले ब्रह्मा वाचंयमो बुभूषेदेवेत्यवधारणो भवेदेवेत्यर्थः। एवं वाग्यमनं विधाय तल्लोपे प्रायश्चित्तमाह। स यदीति यदि ब्रह्मा प्रमत्तः अनवहितः सन् व्याहरेत् मौनं परित्यजेत्तर्हि भूर्भुवः स्वरित्येव वा व्याहृतीर्वा मनसानुद्रवेत् चिन्तयेत्। वा शब्दस्तन्निमित्तं प्रायश्चित्तान्तरमाह—वैष्णवीं वर्चं मिति। यदि प्रमादाद् ब्रह्मा तदा व्याहरेत्तर्हि इदं विष्णुर्विचक्रमे इति वैष्णवीमृचं वा मनसानुद्रवेदित्यनुषङ्गः। अथ सर्वप्रायश्चित्तं तथा महाव्याहृत्या होमं विधातुं होममुपक्रमते—राजोहमिति। मितस्य मुष्टिभिः परिमितस्य राज्ञ. सोमस्यांशून्वयवानादाय मर्कटवेयध इदन्त्र उत्तरत्र मघवन्निति मर्कटस्य सम्भ्रमानत्वाद् इच मातुष्ठुवे उदपतत्। तत्र किमित्याह—स आरुणीति। यथात्र आरुणि उद्दालक. प्रायश्चित्तं कर्त्तुं आहुतिमुपयोयाच हे मर्कट त्वमेनानग्रसुने विवप्स्यसीति वा अपघलाम्मृत. सन् घतो हृधादयप्म्यसि। मर्कटस्योत्तरं दर्शयति—सहो वाचेति। पुनराकर्णयेत्यत

दर्शयति—प्रायश्चित्तं होष्यामीति । पुनर्मर्कट आह—किमिति । इत्यारुणिरुत्तरमाह—सर्वं प्रायश्चित्तमिति । पुनः मर्कटः पृच्छति—किं सर्वप्रायश्चित्तमिति । इत्यारुणिरुत्तरमाह—महाव्याहृतीरिति । सहोवाचो मारुणेरिति । स मर्कटः श्री मित्यङ्गीकृत्यैव मुवाच ह हे आरुणे आहुतिमान् आहुतिमुक्त्वं मर्कटोऽशूनाद् आजहार अतः सर्वप्रायश्चित्तं होष्यामीति यद्ब्रूषे कथमिति तद्विदाञ्च कथं कस्वेदं प्रायश्चित्त मिति कथमज्ञासीरित्यर्थः । पुनरारुणिरुत्तर माह—सहोवाचेति । स एव मुवाच यत्र कर्मणो न्यूनत्वम् अधिकत्वं मयगतं ज्ञातं यदपि चानवगतं तस्य सर्वस्य ज्ञातस्याऽज्ञातस्य विहितविशेषप्रायश्चित्तस्यैव महाव्याहृतीरेव प्रायश्चित्तिरिति शास्त्रतोऽवगच्छतीति । अस्तु प्रकृते किं मायात मित्यत्राह तस्मादिति । यस्मादेवं तस्मादेतां महाव्याहृती मेव सर्वप्रायश्चित्तार्थं जुहुयात् । तत्रैव प्रायश्चित्तान्तर माह अपि वेति । अपिवाऽथवा अज्ञात मनवगतं यन्न्यूनत्व मधिकत्वम् यदपिवाऽज्ञातं यज्ञस्ये सम्बन्धि मिथ ऋत्विग्भिः मिथः क्रियते । हे अग्ने अस्य यज्ञस्य सम्बन्धि तदुभयं कल्पय । फलासमर्थं कुरु । हि यस्मात् त्वं यथायथं कर्मणः स्वरूपं वेत्थ जानासि । स्वाहा सुहुतमस्तु इत्यनेन मन्त्रेण जुहुयात् । अपिवा इति । अपिवा प्राजापत्यां प्रजापते इत्यस्य व्याख्यानं शुक्लं नोऽस्माकं तदभीष्टं मस्तु किं तु वय रयीणां धनानां पतयः स्यामेति । अनेन मन्त्रेण प्राजापत्यां प्राजापति देवताका माहुतिं जुहुयात् । तद्धेतेनैव आत्मानं च यजमानं च स्वेनाभीष्टेन

रसेन यज्ञफलेन समर्द्धयति समृद्धिं करोतीति। यज्ञेन मृण्मयपात्रभेदने प्रायश्चित्तं दर्शयति—अथ यद्यावित्ति। अथ पुनश्च यद्दे किञ्च यदपि शरावोदञ्चनादिकं मृण्मय पात्रं भिद्येत तद्भिन्न पात्रं भूमिर्भूमिरित्यादिना मन्त्रेणाभिमृशेत्। अस्य मन्त्रस्याय मर्थः—भूमिविकारात्मिका भूमिः प्रकृतिभूतां भूमि मगात् अपि च माता सर्वस्य जगतोनिर्मात्री मातारं पृथिवी मेवागात् द्यौः पिता पृथिवी मातेति श्रुतेः वयं पुत्रैः पशुभिश्च समृद्धा भूयाम भूयास्म यस्मुरस्मान् द्वेष्टि स भिद्यतां विदीर्य्यता मिति तद्देतेनैव तदभिमर्शनेन आत्मानं च यजमानं च स्वेन रसेन समर्द्धयति ॥ ६ ॥

इति श्रीसायणाचार्य्य विरचिते माधवीये वेदार्थप्रकाशे पञ्चिंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

## अथ सप्तमखण्डः ।

अर्थवादपुरःसरं सौम्यं चरुं विधत्ते—घ्नन्तीव वा इति। राजानं दीयमानं औषध्यधिपतिं वा सोमं घ्नन्तीव हिंसन्तीव। स च सोमस्तेन प्रमीयत इव भवति। यद्यस्मा देवं सोमं तदभिषुण्वन्तीति तस्याभिषुतस्य मृतप्रायस्य सोमस्य एतां प्रसिद्धाम् अनुस्तरणी मृतस्यानुस्तरणीमेतां कुर्वन्तीति यद्यस्मात् सौम्यं सोमदेवत्यं चरुन्निर्वपन्ति तस्मादत एव लोके पुरुषाय सर्वस्मै मृतायानुस्तरणी क्रियते।

वैतरणी नवुत्तारिका गौः दीयते । अतः सोमाभिषव-निमित्तं सौम्यं चरुं निर्वपेदित्यर्थः । तथा चाध्वर्य्युशाखाया माम्नायते—घ्नन्तीव वा तं सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तदुत्तरार्द्धे वा मध्ये वा जुहुयादेताभ्यां समं दद्यात् दक्षिणार्द्धे जुहोती-त्यादि । हुतशिष्टे पात्रस्थिते सौम्ये चरावाज्यं पूरयित्वो-दवेक्षणमर्थवादेन विधत्ते साध्यानामिति । पुरा सत्रं बहुकर्त्तृकं द्वादशादिबहुदिनसाध्यं यागमासीनानामनु-तिष्ठतां साध्यानामेतन्नामकानां देवानामचक्षु चक्षुःषु केश-राग्निकता जज्ञिरे ते देवा इन्द्रमुपनिपेदुः इन्द्रमुपगमन् गत्वा चेदमवोचन् । तेषां सत्रमासीनानामस्माकं चक्षुःषु शर्करा कथं जायेरन् । हे इन्द्रचक्षुःषूत्पन्नाः शर्कराः विद्याः जा-नीष्व । इत्येवं पृष्टमात्रस्तत्परिहारं यातेभ्यो देवेभ्यः सौम्ये चरावेतत् प्रसिद्धं श्रायं भा इडमाजरं प्रायच्छत् । ततस्त-दाज्यमवैक्षन्त । तदवेक्षणेन ते देवाः प्रास्नन् तेषां चक्षुंषा-यतत शर्कराश्रभूवन्नित्यर्थः । कश्चित् पुमानेव विद्वान् जानन् सौम्यं चरुमाज्यं पुनरवेक्षेत इत्यर्थः । अत्र विशेषो बह्वृचब्राह्मणे श्रूयते । प्रतिगृह्य सौम्यं होता पूर्वं छन्दोगे-भ्योऽवेक्षेत एके पूर्वार्धं छन्दोगेभ्यो हरति तत्तथा न कुर्या-द्यषट्कर्त्ता प्रथमः सर्वभक्षान् भक्षयतीति ह स्माह । तेनैव रूपेण तस्मादवषट्कर्त्तैव पूर्वमवेक्षेताथैनं छन्दोगेभ्यो हर-तीति प्रशंसापूर्वकं वैतिकर्त्तव्यताकं सौम्यं चरुं पायनं वि-धत्ते योऽसमन्नाद्यायेति । यः पुमानन्नाद्याय अन्नादिभक्षणा-यालं समर्थः सत्वपि अथ शब्दः अप्यर्थे । सत्रं नाद्याहालि

शरीत्वा स पुमान् सदृशो दक्षिणार्थं द्विजातिगम्यत्वादेव होमविशेषहुतशिष्टं सौम्यं चरुं प्राश्नीयात् उद्गाता। तस्माद् भक्षणादन्नाद्यं तं जनं आमति प्राप्नोति यो जनो अन्नाद्याय समर्थः सन्नपि अन्नं नास्ति किञ्च अस्मात् प्रागन्नात्वितरोऽपि दृप्ता भवन्तीति शेषः अतो अन्येन जनहितेनान्नेन भक्षणसौम्येनैवाद्यमस्ति अदनाददन सामर्थ्येनैवान्नमत्तीत्यर्थः। न केवलमिहलोके किन्तु परत्राप्यन्नादो भवतीति ॥ ७ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे प्रथमाध्याये सप्तमः खण्डः ॥ ७ ॥

॥ इति प्रथमः प्रपाठकः ॥ १ ॥

# अथ द्वितीयः प्रपाठकः ।

---

## प्रथमः खण्डः ।

अथाग्निमे वह्निष्यमाने धर्म्माः कथ्यन्ते । तत्र तावदुपाग्नौ गायतानर इत्येतामाद्या ऋचं साम्ना प्रच्छन्नां गायेदिति प्रशंसापूर्वकं विधत्ते प्रजापतिरकामयतेति । प्रजापतिर्विधाता पुरेवमकामयत बहुस्यां स्थावरजङ्गमत्वेन नानाविधोऽहं भवेयं तस्यैव विवरणं प्रजायेयेति । स एवं कामयित्वा रेतस्यां रेतस्या प्रथमाधूस्तदत्र याहगपि रेतस्या । तामुपाग्नै गायतेत्येतामृचं साम्ना प्रच्छन्नां व्यासाम् अभायत् । यदि यचिदृचमसाम्नी सामरहितामगास्यत्तर्हि अनस्थिकं अस्थिरहितं मां समजनिष्यत । तत् साम निराधारमजनिष्यत तत् साम निराधार अजनिष्य तेत्यर्थः तस्माद् यामृच साम्ना प्रच्छन्नां गायति गायेदित्यर्थः । यस्मादेवं तस्माल्लोके पुरुषो मांसेन त्वचा लोम्ना च प्रच्छन्नं समजायत इति रेतस्यापान्वि' प्रदर्णं विधत्ते चिरुद्गृह्णातीति । पवमानायेन्दव इत्यत्र यकारवकारयाकारेषु त्रिषु अक्षरेषु प्रत्येकं प्लुत कुर्यादित्यर्थः । तथाच ब्राह्मणः रेतस्यायास्त्रिरुद्गृह्णातीति ब्राह्मणं भवतीति या३वा३मानायेन्दवा३ इति । तत् प्रशंसति त्रय इमे लोका इति इमे प्रसिद्धाः पृथिव्यन्तरिक्षद्युलोकास्त्रयः एषां लोकानामवरुध्ये प्राप्त्यर्थं त्रिरुद्गृह्णीयात् यत एव च त्रिभ्यो रेतः

सिध्यति। तत्त्वं हिङ्कारं निषेधति न हिं कुर्य्या-दिति। हिङ्कारनिन्दया तद्वर्जनं प्रशंसति वज्रो वै इति। निगदसिद्ध मेतत्। नियमान्तर माह रेतस्या इति। रेतस्या प्रथमा ऋक् छन्दसा गायत्री देवतया प्राजापत्या प्रजापतिना गीतत्वादित्थिवं सर्वं धारयन्नेतया रेतस्या गायेत्। हि यस्मादिदं सर्वं रेतः। तथा च श्रूयते प्रजापते रेतोदा देवानां रेतो वर्षाः वर्षस्य रेत ओषधय इत्यादि। रेतस्यायाः सेतिकर्त्तव्यताकं गानं विधायेदानीं द्वितीयाया मभिते मधुना पय इत्यस्यां गानं विधत्ते। द्वितीयाया गायतीति गायेदित्यर्थः। तत्र विशेष माह तस्यादिति। तस्या ऋचि द्वे अक्षरे सन्नयन्तौ व्यतिषजति व्यतिषक्ते कुर्यात्। ते के अक्षरे इत्यत उक्तम् मध्यमस्य पदस्याथर्वाणो अग्निरयुरिति। अस्य पादस्यो त्तममन्त्यमक्षरमुत्तमस्य देवं देवाय देवयुमिति अस्य च प्रथमं चाक्षरं तथा च द्राह्यायणेन गानमे व्यतिषङ्ग दर्शितवान् आथर्वाणो अग्नियादेव पूर्वं देवायदा इति एतत् प्रशंसति व्यतिषक्ताविति। स्पष्टार्थः। गाने नियमं दर्शयति गायत्रीच्छन्दमिति। छन्दसा गायत्री देवतया आग्नेयी। अत्यधिष्ठानरूपां पृथिवीं ध्यायन्नेतया गाये-दिति। अथ सनः पयस्वगंगव इत्यत्र तृतीयायां गानं विधत्ते तृतीयां गायतीति। गाने विशेषमाह—तां बल वदिवौरसेव गायतीति। ता ऋचं बलदिव प्रयच्छन्त-दिव। उरःस्थानेनैवोद्गायेदित्यर्थः। विशेषमाह तस्या इति। तस्या ऋच उत्तमार्द्धे द्वे अक्षरे द्योतयतीति

ब्राह्मणं भवति ये जर्द्धं हिङ्कारात्ते निर्ब्रूयादिति गौतमः पाथाइति धानञ्जय्य इति। हिङ्कारादूर्द्धं यदक्षर निरुक्तं गेयमिति गौतमस्य मत हिङ्कारात् पूर्व्वं पाथा इत्यक्षरद्वयं निरुक्तं गेयमिति तत् प्रशंसति चक्षुरिति। तत्तेन अक्षर-द्वयद्योतनेन चक्षुरेव प्राणत्वेन युनक्ति। तस्मात्तत एव चक्षुर्युक्तं सम्बन्धमेव भवति अत्रापि गाने भिदमाह— त्रिष्टुप्च्छन्दसेति। पूर्ववद्व्याख्येयम्। अथ द्वितीयत्या रुचेत्यस्यां गान विधत्ते चतुर्थी गायतीति। अत्र विशेष-माह—तस्यायत्वारीति। थिरस्य गायेदित्यर्थः। ततः स्तौति द्वादशाक्षरपदेति। तदेतदनूद्य मतभेदेन व्याचष्टे सूत्रकारः। तस्याय त्वायुंत्तमार्द्धेऽक्षराणि श्रोमयतीति ब्राह्मणो भवति हिपुरस्ताद्धिङ्कारात्तयोपरिष्टादिति गौतमः सोमाः शुक्राइति धानञ्जय्यइति स्पष्टार्थः। तत् प्रशंसति श्रोत्र मेवेति। तत्तेनाक्षरचतुष्टयद्योतनेन श्रोत्र मेव प्राणत्वेन युनक्ति। तस्मात्तत एव श्रोत्रत्वं युक्ताक्षरचतुष्टय सङ्ख्यया। कर्णे हे श्रोत्रे उपाधिभेदेन तथा प्रतिश्रवणे प्रतिधूनि इत्येवं मतः तस्मात्पुरुषः सर्वा दिशः शृणोति। सर्वासु दिक्षु वर्त्तमानशब्दान् शृणोतीत्यर्थः। तस्यैव विवरणं परागपि यदगच्छत् प्रत्यङ्शब्दान्नपि सर्वतः शृणोति। गाने नियम माह जगतीच्छन्दसेति। हिन्वानो हे त्वभिरित्यस्यां गान विधत्ते पञ्चमीमिति। वचनाच्चतु-रवनर्द्दीपञ्चमी कार्या हिङ्कारादूर्द्धम् एकः त्रयः पूर्वे अवन-र्दोस्तत्र पूर्वेषु त्रिष्वप्यवनर्द्दयन्त्यक्षरं निनर्द्देदित्यर्थः। तत् प्रशंसति श्राह वहुतमादिति। य एवं विनर्द्दायति स

बहुतमापुरुषावहुसन्ततिपर्य्यन्त मत्र मत्तीत्यर्थः किञ्च य एवं वेद सोऽपि अन्नादो भवति। तत्रैव विशेषोत्तर माह। निरुक्ताश्चेति। ता मृचनिरुक्ताश्च गायेत् अयमर्थः। तस्य चत्वारो गीयते। अवनर्हाः तानिनर्द्दयन् क्रमेण निरुक्त मनिरुक्तमिव व्यत्यासङ्गायेदिति। तथा च द्राह्यायणः—तस्याः द्वितीयं पाद निर्ब्रूयात्तृतीये चाक्षरे पञ्चम षष्ठे इत्यस्यार्थः। अस्या द्वितीयं पादं निरुक्तं गायेत् तृतीये पादे प्रथम चतुरक्षर मनिरुक्तम्। पुनः पञ्चमषष्ठे निरुक्ते गायेत्। हिङ्कारादूर्द्ध्वं पुनरप्यनिरुक्त मित्येवं व्यत्यासमिति तत्प्रशंसति निरुक्तेन यै इति। अस्या ऋचि निरुक्तत्वेनैव अत्तत्योक्त निरुपदे निरुक्तपदैः वाक्यालम्बनं भजति किञ्च अस्या निरुक्तं तत् कार्य्य मुपजीवन्ति यएवं वेद सोऽपि वाचं भुंक्ते य एना मुपजीवति च। अत्र नियम माह अनुष्टुप्छन्दसा इति। एयां छन्दसा मनुष्टुप्छन्दश्चतुष्टं भूतभविष्यद् वर्त्तमानस्य पादचतुष्ट मिति चतुष्टसाम्यादेव तया प्राजापत्या सर्व मेवन्न्यायन् गायेत्। हि यस्मादिदं जगत् प्राजापत्यं प्रजापतिसम्बन्धीति। अथ ऋधक् सोमस्यस्य इति। अस्यां गानं विधत्ते यत्रौ गायन्ति। अत्र विशेषं दर्शयति—तस्मात् द्वे द्वे अक्षरे षडक्षरपर्य्यन्तम् उदात्तं गायेत्। तदेव मतभेदेन दर्शितवान् सूत्रकारः सप्तगमानोदायिया कावा३ इति धानञ्जय्यः। कवा३ इति शाण्डिल्य इति तदक्षरसंख्यां गायति। तत् प्रशंसति षडृतव इति। षट्स्वेवं वसन्तादिषु सर्वं प्रतितिष्ठति। ऋतौ एव विभिन्नस्य कालस्य मर्य्यात्पत्तिमन्निमित्तका-

रथत्वात्। अत्रापि नियम माह पङ्क्तिच्छन्दसा इति। पूर्ववद् व्याख्येयम्। एवं सर्वासृचु गानं विधाय किञ्चिन्मद्‌दुच फलदर्शनेन स्तौति इडेव च वा इति। गायत्रीच्छन्दोयुक्ते प्रातःसवने त्रिष्टुभं तृतीया ऋचं गायति जगतीं चतुर्थीं गायति अनुष्टुभं पञ्चमीं गायति षष्ठीं पङ्क्तिं गायति। एवं सोम मिडेव चकारात्परत्रापि विरक्ति रादराथी। मनसा गच्छति। सङ्कल्पेनाभीष्टानि प्राप्नोति इत्यर्थः। गायत्रे गानं दर्शयति गायत्रे हे गायतीति। तत् फलं दर्शयति प्राणमेवेति। तत्तेन हयोर्गानेन प्राण मेवाप्नोति। हि यस्माद्‌गायत्रं यथा फलप्रत्वात् वहिष्पवमानेपि विशेषान्तरं विधत्ते रथन्तरीति। उत्तरा ऋचं रथन्तरवर्णान्तां गायेत्। अत्र विशेष माह द्राह्यायणः—तस्या ऊर्द्ध्वं प्रस्तावाचत्वार्यक्षराण्यभिष्टोभेदिति। तस्यायमर्थः। तस्या रथन्तरवर्णोत्तमात् प्रस्तावादूर्द्ध्वं मुद्‌गीथस्यादितश्चत्वारं रथन्तरवदक्षारैरभिष्टोभेदिति। तत् प्रशंसन्ति इयं वै इति। इयमेव ऋक् रथन्तरं तद्धर्मकत्वात्। किञ्च अस्या मेव ऋचि सामनि च प्रतितिष्ठतीति यद्वा अस्यां गोयमानाया मेवं यजमानः प्रतितिष्ठतीति। यज्ञफलं भवेदिति।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

षड्‌विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके प्रथमः खण्डः॥ १॥

---

## अथ द्वितीयखण्डः ।

अथैतास्वृक्षु विधास्यमानेन बहिष्पवमाने सामानु-लोम्यं विधत्ते—ता वा एता इति। समर्था भवन्ति। यथेन्ने पराच्य मानुलोम्येन गीयन्त इत्यर्थः। आज्यस्तोत्रेषु तासां प्रातिलोम्यं विधत्ते—प्रतीच्यइति। येन प्रतीच्यः प्रत्यङ्मुखाः प्रतिलोम्ययुक्ता भवन्ति तेन मनुष्यलोकाय युज्यते देवलो-कापेक्षया मनुष्यलोकस्य प्रत्यग्भूतत्वात्। प्रशंसापूर्वं धूर्गानं विधत्ते—एष वा वजात इति। तस्य बहिष्पवमा-नस्य सम्बन्धिन्यो धुरो येन गीयन्ते गायत्री गीतेरेव केवल-विकारा धुरः। यथोगाष्टचोपि धुर इत्युच्यन्ते। एष वाव अय मेव जातः जन्म फलवान्। एष वाव अयत्नुप्तजरायुः। जरायुर्गर्भवेष्टनं तद्रहितः अप्रानरहित इत्यर्थः। अत एव आर्त्विजीनः ऋत्विक्कर्मार्हः यः एवं विद्वान् जानन्धुरो गायति स ज्ञानमेवेन मन्नाद्याय परिवृणक्त्येव उद्गातार मेवान्नभक्षणाय समर्थं करोतीत्यर्थः। किञ्च उभावन्नमत्त उद्गाता यजमानयोभावन्नमत्तः। तत्र प्रथमगाने विशेषण-माह या प्रथमा इति। तत्र या प्रथमा धूः ता मन्नाद्यं भूयादिति ध्यायन् गायेत्। तत्प्रथमति रेतस्य इति तत्तेन ध्यान पूर्वकेण गानेन यष्टुः सिक्ताय मेकाधैव प्रजोत्पत्ति-रेवेत्यर्थः। अन्नाद्यं मति दधाति। धारयतीति। तत्रत्य हिङ्कारं प्रतिषेधति न हि कुर्य्यादिति। हिङ्कारनिन्दया तद्वर्जनं प्रशंसति यद्धिङ्कुर्य्यादिति। व्याख्यात मेतत्। तस्या छन्दो रेतस्या दर्शयति रेतस्या इति। छन्दोरेतस्या प्रथमा गायत्री युज्यते मतश्च प्रजापतिना प्राणत्वेन धीयते॥

अथ द्वितीयस्या ऋचि गाने विशेष माह—या द्वितीया इति तस्य या द्वितीया तमागां गायत्रेन प्राप्ता गायत्री गायत उद्गाता तस्या ऋचो द्वे अक्षरे संग्रयन्तो व्यतिमजति। कथं मध्यमस्य पदस्योत्तम मक्षर गृह्णन्। अस्य पाद प्रथमं अथर्वाणो अग्निस्युर्देवं देवाय देवयुरिति। अन्यत् पूर्ववत्। या तृतीया ता मिति। या त्रिष्टुभं गायन् तस्यान्तिमार्द्धर्चे हिङ्काराढ्ढूर्ड्ं या द्वे अक्षरे द्योतयति निरुक्तं गायेदित्यर्थः स्पष्टमन्यत्। चतुर्थ्या विशेष दर्शयति—या चतुर्थी तां जगती मगान् गायन्स्तस्या चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयति श्रोत मेव तद् युनक्ति। जगतीं गायन् तस्या द्वे उत्तमार्द्धे चत्वारि अक्षराणि हिङ्कारात् पूर्वं द्वे उपरिष्टाद् द्वे अक्षरे इति चत्वारि सोमाः शुक्रा इति या चत्वार्यक्षराणि द्योतयति। अन्यद्व्याख्यातं पूर्वखण्डे। अभिहितस्यार्थस्याचाभिधाने न पुनरुक्तिदोषः। विशेषान्तरविधानायानूद्यमानत्वात् पञ्चम्यां विशेष माह—या पञ्चमी ता मिति। या पञ्चमी तां गायन् चतुर्द्धा व्याहृत्य चतुरवनर्दं कृत्वा गायेत्। यत एव लोके इद प्रसिद्धं पुरुषश्चतुर्द्धा पादमध्यहस्तशिरोरूपैश्चतुर्भिर्भागैः विकृतः सन्वीर्याय जायते समर्थो भवति तत एवैना मनुष्टुभ मृचं चतुर्द्धा व्याहृत्य वीर्याय रेतार्थ मेव गायति। किञ्च उच्चावचामिव एता मृचम् अप्रभेदेन निरुक्ता मनिरुक्ता मिव गायेत्। हि यस्मात् वागुच्चावचा मिव व्यवहाराय भवति। अपि च सङ्गत्येव ग्लवनं निमित्तमेव गायेत्। हि यस्मात् पुरुषो लोके सङ्गत्येव विस्पष्टमेव यथा भवति तथा यार्थं

वदति किं चात्रानुष्टुप् छन्दो युज्यते वाक्प्राणत्वेन धीयते। प्रजापतिर्नेति शेषः।

अथ षष्ठ्या विशेषं दर्शयति या षष्ठी तामिति अत्र पङ्क्तिच्छन्दा युज्यते एषा ऋक् छन्दः पङ्क्तिः सा चैवेत्यर्थः समानी दानी प्राणत्वेन धीयते। शिष्टं व्याख्यातमिति।

अथ बहिष्पवमाने स्तुतो विधानानि कथ्यन्ते सदिति। इति प्रथमायां स्तुतः सदिति निधनं कुर्यात्। हि यस्माद्रेतसोपि हिपि शब्दः सम्यर्थः द्योतनार्थः रेतसि स द्रवेण प्रायते। द्वितीयायां निधनं दर्शयति समिति। समिति निधन द्वितीयस्या कुर्यात्। यद्यस्माद्रेतसो विश्वस्य सम्भव इत्यर्थः। तृतीयायां निधन दर्शयति स्वरिति। स्वरिति तृतीयाया निधन कुर्यात्। तेन स्वर्गं लोकं प्रजानाति। चतुर्थ्या निधन माह इडेति चतुर्थ्या इति। इडेति चतुर्थ्या निधन कुर्यात् पशवः खलु इडा भोग्यत्वात् तेन पशुष्वेव प्रतितिष्ठति पशुमान् भवतीत्यर्थः। पञ्चम्या निधनं विधत्ते ---वागिति। पञ्चम्या ऋचो वागिति निधनं कुर्यात् तेनाग्निनिधनस्य कर्त्तरि सर्वाः प्रजाः पुष्टाः स्वाभिरूपा वाचो वदन्ति यथोतास्य वेदितारं प्रशंसति- य एव वेदेति। यः पुमानेव निधनानि वेद सोऽपि यथोक्तफल लभत इति शेषः।

अथ तास्वेव धर्म्मान्तराणि कथ्यन्ते। तत्र प्रथमायां तद्विशेषमाह—या प्रथमा तामिति। प्रथमा मायच्छन् प्लुतोच्चारणेन विधारयन्निव गायेत्। हि यस्मादयं प्रसिद्धोऽवाङ् प्राण अवत इव भवति। द्वितीयायां धर्म्मान्तरं

विधत्ते या द्वितीया तामिति । घोषिणः घोषवतीमिव गायेत् । स्पष्टमन्यत् । तृतीयायां धर्मान्तरं विधत्ते— या तृतीया तामिति । उपयच्छन्ति वीप्सं गमयतीव व्याख्यातप्राय मन्यत् । चतुर्थी धर्मान्तरमाह—या चतुर्थी तामिति । व्याख्याततर मेतत् । पञ्चम्यां धर्मान्तरमाह— या पञ्चमी तामिति । अंशभेदेन क्वचिन्निरुक्तं क्वचिदनिरुक्त मिव गायेत् हि यस्मादयं समानः प्राणो निरुक्तोऽनिरुक्ता-निरुक्तमिव क्वचित् स्पष्टः । क्वचित् स्पष्ट इव शरीरे वर्त्तते । षष्ठ्यां धर्मान्तरमाह—या षष्ठी तामिति । उत्तमा सर्वं रथन्तरवर्णा रथन्तरस्येव वर्त्तमानचतुष्टयोपेतायेत्यर्थः । एतत्सर्वं व्याख्यातमिति नात्र पुनरुक्तिः शङ्कनीया पूर्वख-ण्डविवरणरूपत्वादस्य खण्डस्येति ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके द्वितीयः खण्डः ॥ २ ॥

---

## अथ तृतीयखण्डः ।

गाख्यायिकाधुरः प्रशंसितु मुपक्रमते—देवाश्च वा असुराश्चेति । पुरा देवाश्चासुराश्च एषु पृथिव्या लोकेषु विषयेषु अस्पर्द्धन्त तत्र ते, असुरेभ्य, स्पर्द्धमाना इन्द्रादयो देवाः प्रजापति मुपाधावन् ततः किमित्यत आह—तेभ्यः एतामिति । स प्रजापतिस्तेभ्य एताम्वक्ष्यमाणां धुरः । धूरात्मकान् प्रायच्छत् । तद्विविनक्ति—प्रथमं मन, अथा

नन्तर प्राणः ततश्चक्षुः अथ श्रोत्रम् अथ वाचमिति । ततोऽपि किमित्यत्राह—ताभ्य इति। तेभ्यो मनआदि रूपेभ्यो धूर्भ्यः पुरुष पशूंश्च निरमिमीत उत्पादितवान्। अस्त्वेव किन्तत इत्यत्राह—तेन पुरुषेणेति। तेन धूर्भ्यो निर्निमित्तेन पुरुषेण देवा असुरानधूर्वन् अवधिषुर्यदस्मा दधूर्वन्नतो धुरा धूस्त्व मभूत् यत एवमुक्तरीत्या धुरः स्वरूप वेद भ्रातृव्य शत्रुरूपं पाप्मान धूर्वति हिनस्तीति। पुन रपि प्रकारान्तरेण धुरः प्रशंसति—यो वै धुरामिति। य खलु धुरा यथोक्तं धूस्त्वं वेद स भ्रातृव्याच्छत्रोः सकाशा दाहृतया धुराः अनेकधनभारैर्वसीयान् अतिशयेन वसुमान् भवति किञ्च॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीय प्रपाठक तृतीयः खण्डः ॥ ३ ॥

---

## अथ चतुर्थखण्डः ।

प्राञ्चमग्निमिति। यस्मादग्निरुत्तरेतार. शालामु ख्यीयादुत्तरवेद्या प्रति प्राञ्चमग्नि मुद्यन्ति तस्मा द्धोता प्राङ्डासीन. प्राङ्मुख उपविष्टोऽन्वाह अनुब्रूहि स प्रेष मनुवचन कुर्यात्तथा प्राङ्डासीनो यजति याज्या पठेत्। प्राङ्डासीनः शसति शसन पठति। धर्मान्तर माह—अमावास्य इति। धर्मान्तर दर्शकति अद्यैव चन्द्रमा इति॥

अथ शब्दोऽवयवीपक्रमे। यत एवं चन्द्रमा दक्षिणेन पथा एति गच्छति तस्माद्ब्राह्मणं दक्षिणतो दक्षिणदिग्भागे आसयन्ति उपवेशयन्ति। अन्यत् धर्मं दर्शयति अथैतस्यामिति। अत्यधिकं पर्जन्यो विद्योतते विशेषेण खं मूर्त्तिमान् प्रकटयति। तस्मादुद्गाता एतामुदीचीन्दिशं प्रति उदङ्मुखः सन् उद्गायति। धर्मान्तरं विधत्ते—अथैष इति। भूतानां पृथिव्यादीनां मध्ये एष व्याप्त आकाशः सन्नवहितो भवति। तस्मात् सदसो मध्ये सदस्यं सप्तदशमृत्विजमासं जयति। धर्मान्तरं विधत्ते—उच्चावचा वा इति अत आप उच्चावचा न्यूनाधिकभावेन वर्तते। उतापि च ता आपो गाधाः क्वचिदपगतप्रतिष्ठा इव भवन्त्यत एव गभीरादस्माहोत्राशंसिनः। उतापि च ता आपो गभीरा अगाधा इव भवन्ति। तस्माद्धोत्राशंसिनोपि पञ्चर्चेन शस्त्रेण स्तुतिं कुर्वन्ति। उतापि च भूयसा षडीभिः ऋत्विभिः साध्येन शस्त्रेण स्तुतिं कुर्वन्ति। धर्मान्तरं विधत्ते आदित्यस्यैवेति ॥३

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके चतुर्थः खण्डः ॥ ४ ॥

---

चमसाध्वर्युभिराहूतेषु तद्वच मनुज्ञातु मिच्छते इच्छेत् । कथमित्याशङ्क्य तत्र प्रथम होतृविषयोपहवप्रकार दर्शयति अग्निर्मेहोतेति । मे ममाग्निरेव होता मनुष्यात्मको होता समुपहूतवाम् अनुजानातु इत्युपाऽशूच्चार्य होत उपमाह्व यस्वाऽनुजानीहि इति तत्र भाग मुच्चैरुच्चारयेत् । अध्वर्यु विषयोपहवप्रकार दर्शयति आदित्योमेति । मम आदि त्यएवाध्वर्यु स मा मुपह्वयस्व स मा मित्युपाशूचार्य । उपमाह्वयस्वेति । मन्त्रभागमुच्चैरुच्चारयेदिति । ब्रह्मविषय तत्प्रकार दर्शयति चन्द्रमा मे इति । मे मम चन्द्रमा इत्येव ब्रह्मा शिष्ट पूर्ववत् । उद्गातृविषयन्तत् प्रकार दर्शयति पर्जन्योमइति । एतदतिरोहितार्थञ्चमसाध्वर्यु विषयोपहवप्रकार दर्शयति-- रश्मयो मे इति । रश्मय आदित्यस्य किरणा एव मेव चमसाध्वर्यव । अन्यत् स्पष्टम । यद्यदि होत्राम सिनयमसाध्वर्यव । चमस भाजिनो न सन्ति तथापि तदनुज्ञा लब्धव्येति नियमार्थ न्तत् प्रकारप्रदर्शनमिति । अग्निर्मे होतेत्यादयो मन्त्रास्ते याजमाना तथा चानुकल्पे दर्शितम् । प्रथम सवनमुखी योग्निर्मे होतेति याजमानमिति । यथोक्त होत्राद्युपहव प्रकार प्रशसति-- तावा एताइति । तावा एता आम्नाया देवता एव ऋत्विजा सम्बन्धिभिरुपहवरूपाभिर्वाग्भिरुप ह्वयन्ते अनुज्ञायते । तत किमित्यताह--स उपहूतो इति । यजमानस्तु उपह्नते होत्रादिभिरनुज्ञात सन् स चमस भक्षयति । यथोक्तमनुज्ञान प्रशसति--प्राणो यजमानइति । यजमान प्राण प्राणमुख्यत्वसाम्यात् । अथो अपि च

यत्र एतासामग्न्यादीनां लोकः । तत्र होत्रादिभिरग्न्यादि रूपैरुपहूतो यजमानोऽनुज्ञातो भवतीति ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
षड्विंशब्राह्मणे द्वितीयब्राह्मणे द्वितीयप्रपाठके
पञ्चमः खण्डः ॥ ५ ॥

---

## अथ षष्ठखण्डः ।

अथ माध्यन्दिनसवनसम्बन्धिन उपहवान् दर्शयति—स माध्यन्दिनेति । पूर्ववद्व्याख्येयम् । कथमित्याशङ्का तत्र कथं- होत्रादि । विपर्योपह्वयप्रकारं दर्शयति—वाग्घोतेति । मे मम वाक् होता मन्त्रोच्चारणरूपा वाचस्तत्कार्यत्वाच्चक्षु- रेवाध्वर्युस्तत्पूर्वकत्वात् सर्वं व्याख्याताङ्गकर्मणः मन एव ब्रह्मा यथा प्राणानां मध्ये मनोऽर्द्धभाक् तथा ब्रह्मा ऋत्वि जाम् अर्द्धभाक् । तथा चैतरेयक ब्राह्मणे "तस्मादृब्रह्मार्द्ध- भाक् प्रवो एव इतरेषामृत्विजामिति । श्रोत्रं मे उद्गाता गीतिप्रतीतिसाम्यात् । अन्यत् पूर्ववद्व्याख्येयम् । अथ सदस्यादिविषयमुपह्वप्रकारं दर्शयति । योऽयमन्तरिति । अन्तश्चक्षुषि चक्षुषोर्मध्ये योऽयमाकाशः स एव मे सदस्यः । अन्तश्चक्षुषि या इमाः परिदृश्यमानाः । त एव होत्राशं- सिनः । मे ममाङ्गान्येव चमसाध्वर्यवः उपकरणसाम्यात् । अन्यत् पूर्ववद्व्याख्येयम् । वाग्घोतेत्यादयोऽपि मन्त्राया- ज्ञमानाः । तथा चानुकल्पः "वाग्घोतेति याजमान- मिति । यथोक्तमुपह्वयरूपाभिर्याभिरुपह्वयन्तः किं कुर्या-

दित्याह—स उपहूत इति । पश्चात् स उपहूतो होत्रादि भिरनुज्ञातः सन्नेव भक्षयति यथोक्तमन्त्रजातं प्रशंसति—अपानो यजमान इति । यजमान अपानाख्यप्राणरूप अन्यत् समानम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके षष्ठः खण्डः ॥ ६ ॥

---

## अथ सप्तमखण्डः ।

अथ तृतीयसवनसम्बन्धिन उपहवान् दर्शयति—स तृतीयसवने इति । पूर्ववद्व्याख्येयम् । कथमित्याशङ्का प्रथम होत्रादिविषयोपहवप्रकारं दर्शयति—प्राणो मे इति । प्राणादय एव होत्रादय इत्येतावान् विशेषः समानमन्यत् । सदस्यादिविषय तत्प्रकारं दर्शयति—योऽयमन्तःपुरुष इति । अन्त पुरुषो देहस्य मध्ये योऽयमाकाशः त इत्याकाश नाम्ना स एव मे सदस्यः। अन्तः पुरुषे इमा प्रसिद्धाः आपः त एव होत्राशंसिनः । देवहर्त्तानि लोमानि एव मम चमसाध्वर्यवः उपाङ्गत्वसाम्यात् समानमन्यत् । एते प्राणा इत्यो मे होतेत्यादयोऽपि मन्त्रा याजमानाः तथाच अनुकल्पः "प्राणो मे होतेति याजमानमिति । यथोक्तं स्तौति ता या एता इति । पूर्ववत्तच्च कुर्यादिष स उपहूत इति । स उपहूतः सवने चमस भक्षयतीत्यर्थः । यथोक्तमनुष्ठान प्रशंसति—स उदान इति । यजमानः स उदानाख्यप्राण

रूपः । शेषं पूर्ववत् व्याख्येयम् । सर्वेषां वै इति । वषट्-
कर्त्ता होता सर्वेषामेव ऋत्विजां चमसम्भचयेत् न स्वस्यैव
चमसमित्यर्थः । किं वषट्कर्त्ता होतृचमसमपि भचयेत् ।
नेत्याह देवानां वा इति । देवानामेव यज्ञस्यैतत् मुख
यदुद्गातृचमसान्तःस्थितं सोमात्मक यत एव तस्मादुद्गातृ
चमसान्तो वषट्कर्त्ता न भचयेत् । अथ उक्तार्थस्य वेदितार
प्रशंसति--एवं विदुषो ह इति । एवमुक्तप्रकारेण विदुषो
यजमानस्य यज्ञो न व्यथते व्यथारहितो ऽदुष्ट एव भवती
त्यर्थः । किञ्चैवं विदुषो यजमानस्येष्टमभिलषितं सर्व्व
यागफलभूतस्वर्गफलहितं भवति । अपिच, अथो यज्ञोक्ता
दङ्गजातायज्ञे एव विद्वान् होनं कुर्य्यात् सोऽपि यज्ञ
सम्पूर्णमेव कृतवान् भवतीत्यर्थः ॥ ६ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्
विंशब्राह्मणाख्ये द्वितीयब्राह्मणे द्वितीयप्रपाठके
सप्तमः खण्डः ॥ ७ ॥

## अथ अष्टमखण्डः ।

अथार्त्विज्येषु ऋत्विजो यजमानस्य स विशेष प्रति
पाद्यते । यद्धोताजहातीति । आर्त्विज्ये होता यत् कर्म
विज्ञाय जुहोति यस्तेन कर्मत्यागेन वाक् च वागेव यज
मानो जहाति वाग्वै होता इति प्रागभिधानात् । तत्तस्मात्
स होता यत् कर्म विज्ञाय करोति तदस्य यजमानस्य
सम्बन्धी यज्ञ. वाचं यजमाने दधाति किं च होता स्वय

मपि इहलोके वाचा विप्पक् सर्वव्यापी सर्वव्यवहारसमर्थ. सन् अमुष्मिन् परलोके सम्भवति स्वमभीष्टफल प्राप्तु समर्थो भवति। अतो होता स्वकर्म सम्यग् विज्ञेयमित्यर्थः। अथाध्वर्युविज्ञेयम्--यदध्वर्युर्जहातीति यजमान समान मन्यत्। अतोऽध्वर्युणा स्वकर्म सम्यग् विज्ञेयमित्यभिप्राय। ब्रह्मविज्ञेय दर्शयति-यद्ब्रह्मा जहातीति। ब्रह्मा यत् स्व कीय कर्म जहाति मन एव यजमानन्त्यजति मनो मे ब्रह्मेत्युक्तत्वान्मनसा विष्णुल मनसि स्थित प्राप्तु सर्वमभीष्ट पूर्ववत्। उद्गातृविज्ञेय दर्शयति-यदुद्गाता जहातीति। यद् स्वीय कर्मोद्गाता जहाति तर्हि श्रोत्रमेव यजमान न्त्यजति श्रोत्र मउद्गातेत्युदितत्वात्। अतः स्वकर्म जानन् करोति च यजमाने श्रोत्र निदधाति स्वयमपि श्रोत्रेषु सर्व श्रोतव्य सर्वतो जानन् परलोके स्वाभीष्ट लभत इति। अत. स्वीयं कर्म सम्यग् जानीयादित्यर्थः। सदस्य विज्ञेय दर्शयति-यत् सदस्यो जहातीति [सदस्य. स्वीयकर्माज्ञाना ज्जहाति आत्मैव यजमान जहाति योऽयमन्त. पुरुष आ काश स मे सदस्य इति सदस्यात्मनोक्तत्वात् स आत्मना विश्वगन्यनिरपेक्षेणैव सर्वव्यापी। शिष्ट सामान्यम्। होत्राशंसिना विज्ञेय दर्शयति--यद्धोत्राशंसिनो जहतीति। यद्धोत्राशंसिनो जहत्यङ्गानि अङ्गान्येव यजमानन्त्यजन्ति यदि स्वीय कर्म विज्ञाय कुर्वन्ति यजमाने अङ्गान्येव दधति ते विपर्वैरपि कालैरन्यैर्विरुद्ध सर्वगा भवन्ति। चमसाध्वर्यु विज्ञेय दर्शयति यच्चमसाध्वर्यवो जहतीति। यदि चमसा ध्वर्यव स्वय कर्माज्ञानात्त्यजति लोमान्येव यजमानन्त्य-

अस्ति लोमानि मे यजमानस्यैव इत्युक्तत्वात् यथोक्त मुप-संहरति—तस्मादिति। यस्मादेवंविद् यथोक्तप्रकारेण स्वकर्म जानन् ऋत्विक् यज्ञे हीन मङ्गवैकल्यं न कुर्य्यात्। अथ वा इति यथानन्तर मङ्गवैकल्यं परिहारायैव ऋत्विजां कर्म्माण्येव यजमानस्य विज्ञान मुच्यते इति ज्ञेयः। किं तदित्येव मित्याशङ्क्य तदुक्त मुपोद्घातमाह—पशवो ह्यध्व-र्युमिति। अथ यजमानस्य पशवोऽध्वर्युमेवानुवर्त्तन्त इति तदीयकीर्त्तिरपि होतार मनुवर्त्तते। अस्य योगक्षेमः अलब्धलाभो योगः लब्धस्य परिपालनं क्षेमः तदुभयमपि ब्रह्माण मनुगच्छति आत्मा स्वयं यजमानः प्रजा च पुत्रा-दिका च उद्गातार मनुवर्त्तत इति॥ ८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
द्वितीयप्रपाठके अष्टमखण्डः।

---

अथ नवमखण्डः।

इदानीं मौपोद्घातिकमाह—स यदि पशवो इति। तत्र स यजमानो यदि पशुतः पशुभ्य आर्धोयेत म्रक्षे-त्तर्हि ममेद मनिष्ट मध्वर्युः स्वकर्मपरित्यागेनाकार्षी-दिति विद्यात् जानीयात्। अथ पुनः यद्येन यजमानं पापिका पापसम्बन्धिनी कीर्त्तिरनूदियात् अनुगच्छेत्। ममेदं कष्ट होता स्वकर्मत्यागेनाकार्षीदिति विद्यात्। अथ पुनर्यद्यस्य योगक्षेमौ व्यथेत नश्येत्तर्हि ममेदं

यष्ट मेऽकार्षीदिति विद्यात्। अथ यद्यसौ आत्मा आर्त्वि-
त्विक्कर्म्मेण प्रजाया पुत्रादिकमायाम्नोयेत्तर्हि वो भवे-
त्तर्हि उद्गाता ममेद मनिष्ट मकार्षीदिति। अथ नैमित्ति-
कान् होमान् दर्शयति—प्राणदेवत्यो वै ब्रह्मा इति।
ब्रह्मा प्राणदेवत्यो वै प्राणदेवत्य खलु। व्यानो मे
ब्रह्मेति व्यानाख्यप्राणात्मकत्वाद्ब्रह्मणः इतरे होत्रादय
ऋत्विज यद्देवत्या वाग्घोतेति श्रुते। यत्र यदि स
यजमानो ब्रह्मा मे मम यज्ञेद मकरोदकार्षीत् इति
मन्यत निश्चिनुयात् तर्हि हरितप्रार्थिताऽवयवोपष्टम्भा
हरितवर्ण दर्भनाड्या प्रबध्य प्रबध्य स्रुच्यवधाय आज्य
चतुर्गृहीत्वा नम प्राणाय वाचस्पतये स्वाहेत्यनेन मन्त्रे-
णोदितेन जुहुयात् अथ पुनर्यदि व यद्येव इतरे होत्रादय
ऋत्विजो मम यज्ञे इद हि इद मकार्षुरिति यजमानो
मन्येत तर्हि नमो वाचे प्राणपत्न्यै स्वाहेत्यनेन मन्त्रेण
पूर्ववच्चतुर्गृहीत माज्य गृहीत्वा जुहुयात्। यदि वा
इतरो ब्रह्मा यदि वा इतरे होत्रादय. सर्वेऽपि न्यून-
मकार्षीरिति यदि यजमानो मन्येत तर्हि तेष्वेव गार्ह-
पत्यादिष्वग्निष्वनुपर्य्याय क्रमेण नम प्राणाय वाचस्पतये
स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेत्याभ्याम् मन्त्राभ्या
पूर्ववत् चतुर्गृहीत माज्य गृहीत्वा जुहुयात्। स्रुचि
निहितस्य हिरण्यस्य प्रतिपत्ति दर्शयति—अथ तद्धिरण्य-
मिति। यथैन हुत्वा पश्चात्तद्धिरण्य ब्रह्मणे दद्यात्। यथो-
क्तप्रायश्चित्तहोम पुनर्यज्ञत्वेन स्तौति—अथ यदाहेति।
अथ मन्त्रो वाक्योपक्रमे। यज्ञो वाव पुनर्यज्ञ एव यज्ञस्य

प्रायश्चित्तिरिति यदाह यच्चैवास्य यज्ञस्य प्रायश्चित्तिरिति। पुनर्बन्ध एव स एतं, ऊहत्वे बाहुतो यज्ञविभ्रष्टस्य प्रहूरुन् न्यूनतस्य प्रायश्चित्तिरिति ॥ ८ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
द्वितीयप्रपाठके नवमः खण्डः।

---

अथ दशमखण्डः।

अथ ऋत्विग्वरणं विधातुं स्तौति—ते वा ऋत्विज इति। ते वै ते प्रसिद्धा ऋत्विजः स विख्यात एव यजमानः तत्र दैवा देवरूपा ऋत्विजः तथा मानुषा मनुष्यसम्बन्धिनोऽप्यन्ये तत्र यं यजमानं दैवा ऋत्विजो याजयन्ति स यजमानो दैवतैर्ऋतुभिरवरुन्धे व्याप्नोति न मनुष्यलोकम्। अथ पुनर्मानुषा ऋत्विजो याजयन्ति स यजमानो मनुष्यलोकमेव तैरवरुन्धे न देवलोकम्। अथ पुनर्यं यजमानं उभये दैवा मानुषाश्च ऋत्विजो याजयन्ति स देवलोकञ्च मनुष्यलोकञ्च तैरुभयैर्ऋत्विग्भिरवरुन्धे एवमुभयविधा ऋत्विजः प्रशस्य तत्र दैवर्त्विग्वरणं विधत्ते—स एतान्दैवानिति। स यजमानोऽग्निर्मे होतेत्यादिना प्रतिमन्त्रैरेतान्देवानृत्विजो वृणीतेति। अथानन्तरं मानुषर्त्विग्वरणं विधत्ते—स एतान्देवानृत्विज इति। स्वयं यजमान एतान्देवानृत्विजो यथोक्तप्रकारेण वृत्वा अथ पश्चादेतान्मानुषानृत्विजो वृणीत। ये ऋत्विजः पुनः

मभिराधयेयुः सम्यक् स्वस्य कर्मानुष्ठानेन फलान्ते समर्थं कुर्युः तत्ताय ऋत्विग्वरणप्रकारः। एतन्नामकेनैतत्संस्थेनैत-सृष्टेने तावद्दृत्विषेन यज्ञेनाहं यष्ये तत्र मे त्वं होता। त्व मध्वर्युरित्यादि। अथ देवयजने विशेष मुच्यते—तत्र प्रथमं क्षत्रिये प्रतिदेवयजनप्रार्थना दर्शयति—अथ क्षत्रिय-मिति। अथ शब्दो वाक्योपक्रमे। क्षत्रियं राजानं देवय-जनं देवा इत्यस्मिन् देशे इति देवयजनं यागदेशं याचेत् यजमानः। राजा देवयजने दत्ते यजमानस्त किं ब्रूयात् इत्यत्राह—स चेत्तस्मादिति। स राजा यद् यस्मै देवयजनं दद्यात् तर्हि त्वं राजा त्व देवयजनवान् भूया-इत्याशीर्वचनं ब्रूयादिति। विपर्यये वचनप्रकारं दर्शयति—न चेत्तस्मै इति। यस्मै प्रार्थयित्रे यजमानाय स राजा यदि देवयजनं न दद्यात्तर्हि यद्देवयजन मह वेद अन्यतो विजानामि विन्दामीत्यर्थः। लब्धेऽन्यस्मिन्देशे त्वां हयानि छिनद्मीत्येवं राजानं ब्रूयात्। अथोक्तं प्रशंसति—अग्निर्वाव इति। अग्निर्वाव अग्निरेव यद्देवयजनम्। अन्यदप्येवं व्याख्ये-यम्। एते देवाग्निरूपेण्येव मदातारं राजान माहवति अथो इ यतएवैन मपोरूपेर्यो देवकर्त्का मेव नेति नयति। तस्माद्राजा देवयजनं याचितो दद्यादेव न निवारये-दित्यर्थः। एवं राजानं प्रति देवयजनप्रार्थनां दर्शयित्वा इदानीं ऋत्विजः प्रति तत्प्रार्थनां दर्शयति—अग्निर्मे होतेति मे ममाग्निरेव होता सोऽग्निरूपो होता मे मह्यं देवयजनं दद्यातु उपांशूशायं होतमें देवयजनं देहीत्यु पे-मन्त्रयेत्। अथ देवेषेवं यथोक्तप्रकारं दर्शयति—तावा

षेता इति। ता एता अम्बादय एव ऋत्विजां सम्बन्धिनीभि-र्वाग्भिः प्रार्थिताः सत्यः देवयजनं ददति यजमानाय प्रय-च्छन्ति स च यजमानोऽम्ब्यादिभिरेव दत्ते देवयजने यजते न मनुष्यैर्दत्ते इत्यर्थः। कीदृशं देवयजन मित्याशङ्का तल्लक्षणं दर्शयितु मुपक्रमते—यदुन्नतमिति। यत् तत्र भूम्याः स्वस-मीपस्थाया भूमेरुन्नतं स्वय मेव न त्वसमीपस्थं प्रदेशान्तरम् उन्नत देवयजनत्वे ग्राह्यं तथाच द्राह्यायण —नचास्य स्थूल-तर मदूरे स्यादित्यस्यार्थः। अस्य देवयजनस्य दूरे समीपे स्थूलतर मत्युन्नत स्यात् किन्तु देवयजनसमीपे प्रदेशे अत्यु-न्नत भवेदित्यर्थः। किं च अनूषर ऊषर रहित मेव भूतलं देवयजनस्य एतस्यैव विवरण यत्र यस्मिन् भूतले ओषधयो बहुला भवेयुस्तदनूषरम् ऊषरप्रदेशे तेषा मनुद्भवात्। अपिच अत्र च देशे चात्वालसारिण्यः। चात्वालसारिण्य आपः स्युः तस्य चात्वालदेशस्य पुरः पुरस्तादापः सञ्चरन्ति तद्देव-यजन कार्यम्। विशेषान्तरमाह—तस्य न पुरस्तादिति। तस्य देवयजनस्य परिमाणस्य हि पुरस्ताच्छम्याप्रासात् श-म्यानिपातनावधिर्देशोऽस्ति ततः पुरो देवयजनमात्र देवय-जनस्य यावत् प्रमाण तावन्मात्र प्रदेश नातिशिष्यान्नाति वर्त्त-येत् अवशेषयेत्। तदवशेषणे प्रत्यवाय माह—अवरपुरुषा इति। अस्य देवयजनस्य पुरस्ताद्भागे शम्यानिपातना-दर्वागेव देवयजनमात्रं मतिरेचयन्ति अतिशेषयन्ति अस्मा-त्तदवशेषादवरपुरुषा यजमानातिरिक्ता इतर इत्यर्थः। ते श्रेयांसः। अतिशयेन प्रशस्या भवन्ति। प्रसङ्गाद्देवयज-नस्य दक्षिणभागे तद्योग्यदेशस्थिते न दोष इत्याह—कामं

दक्षिणत इति । दक्षिणतः कामं यथेष्टं अभिचरेयुः तर्हि न यजमानं दक्षिणा आगामुकाभवन्तीति । पश्चिमभागे तावद्देशावग्रपणे प्रत्यवायमाह—कामं पश्चादिति । कामं इच्छया पश्चाद्भागे यदि तावन्मात्र शेष मवग्रयेयुः अस्मादतिरेकादवरपुरुषाः श्रेयांसो भवन्ति । उत्तरभागे तावन्मात्रदेशावग्रणे श्रेयःप्राप्तिं दर्शयति—काम मुत्तरतइति । उत्तरतः काममिच्छयातिरेकः कामलन्नीन यजमानम् उत्तरा अन्यापि पुनर्यागप्राप्तिः देवयज्योपनामुका भवति प्राप्नोतीत्यर्थः । किं चास्य यौदत्तरोत्तरिणी परम्परया वृद्धा भवति । धर्मान्तर दर्शयति—यस्य पुरस्तादिति । येस्य पुरस्तात्ताग्निनाय आदित्य इति त्रीणि ज्योतींषि दृश्येरन् तद्दे वयजन कार्यम् । एव सति तस्मिन्क शुक्रं शुक्रं ज्योति' तिष्ठतीतिस्क भवतीत्यर्थः । तत्र देव यजनस्य पुरस्ताद्भागे अपामेवावस्थानं विधीयते । अग्न्यादित्ययोरवस्थान मनुवदति । पुरस्ताद्भागे आहवनीयस्योपस्थाननियमादित्यवस्थानस्य प्रत्यक्षसिद्धत्वात् । अपा मभावे न्यग्रोधादि नापि भवितव्यमिति दर्शयति—पुरस्तादिति । देवयजन पुरस्तात् परिभागे चित्र यो वनस्पतिन्यग्रोधादि तच्छुक्रमेव यार्य्यम् । तथाच द्राह्यायणः तदभावे महाद्रुम उदपानो महापथो वेति । तस्यार्थः तरङ्गिणीतटकादीना मभावे द्रुमः । उदपानः कूपः महापथो वा ग्राह्यइति । पश्चाद्भागे महाद्रुमावस्थाने प्रत्यवाय माह—यस्य चित्रमिति । यदि देवयजनं पश्चाच्चित्र भवेत्तर्हि श्मशानकरणमेव स्यात् । धर्मान्तरमाह—प्रागुदक्प्रवणमिति । पूर्वोत्तरो देशः प्रवणो निम्नो यस्य तत्तथा देवयज-

नस्तैरान्यम्। (अन्यप्रवणतां , निन्दति—यथाह्वरिणाइति यथोक्तलक्षणं देवयजनं स्तौति—यथा वै दक्षिण इति। यथा वै दक्षिणः पाणिः सर्वेषु पुण्यकर्मसु श्रेष्ठः एवं देवयजनं श्रेष्ठम्। श्मशानकरणं निन्दति—यथा सव्य इति। यथा सव्यः पाणिः पुण्यकर्मसु गर्हित एव यथाश्विरत्वादिलक्षण श्मशानकरणं समयस्त मित्यर्थः। अभिचारयज्ञेषु देवयजनलक्षणमाह—यथा श्मशानकरणमिति। अभिचारीणां श्येनादीनां यागानां देवयजनं यथा श्मशानकरणं यथाश्विरत्वयुक्तं भवति तथा कुर्यात्। तथा द्राह्यायणः। विपर्ययस्त्वाभिचरणीयेषु स्थलादन्यद्देवयजनमालात्येति। अस्यार्थः अभिचरणेषु क्रतुषु स्थलादुन्नतस्थाद्देवयजनमात्रात् पुरस्ताद्देवयजनमात्राऽवशेषां यान्यसर्वभूयस्त्वादिकं विपर्यस्य कुर्य्याज्जिति। एतदुक्तं भवति अपरं विषमं पुरस्ताज्जलशून्यम्। ' यथाश्विरं दक्षिणा प्रत्यक् प्रवणं देवयजनं कुर्यादिति॥ यथोक्तलक्षणदेशाभावं कश्चिद्देश परिग्रह्यो नैत्याह—अप्युहैकइति। अपि शब्दस्त्वर्थे अन्ये एव माहुः। यस्मिन् कस्मिंश्चिद्देशे श्रद्दधानो अत्र अत्र फलं भवत्विनैत्यास्तिकः सन् यजते स प्नोति। यथोक्त फलं प्राप्नोत्येवेति॥ १०॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयताह्मणे
द्वितीयप्रपाठके दशमखण्डः।

## इति द्वितीयः प्रपाठकः।

भ्य: प्रतिगच्छेयु:। यथोक्तं प्रशंसति—एतद्वै इति। एतद्वै देवानां यथोक्तमार्गस्य रूपं देवानां तीर्थं सर्वपापनिवारकत्वात् यदि। उक्तार्थे मन्त्रसम्मति माह—तदेत इति। ऋषिरतीन्द्रियार्थदर्शी सप्ताम ऋषिधर्मोस्थ वह आप्तानं व्यापकं तीर्थमिह लोके क: प्रबोचत्। तस्य महिमानं को वदतीत्यर्थ:। येन तीर्थरूपेण यथामार्गेणागत्य सुतस्य सुतं सोमं देवा प्रपिबन्तो प्रकर्षेण पिबन्ति इति शब्दो मन्त्रसमाप्तिद्योतनार्थ:। प्रकारान्तरेण तदेव प्रशंसति—एतद्वै देवानामिति। एतदेव देवानां सम्बन्धि तीर्थम् अतोऽस्मादस्यास्य .सम्बन्धि तद्तीर्थमयेति। यथोक्तमर्थमुपसंहरति—तस्मादेतैमेवेति। यस्मादेष तस्माद्यथा तेन सम्बन्धेव प्रसृते प्रवेशे प्रपद्येत तथा एतेनैव पथा निष्क्रामत् अवभृतार्थं निर्गच्छविर्गमनकाले रक्षोघ्न मवभृथ साम गेयमिति दर्शयितुमाख्यायिकया तत् प्रशंसति तान् प्रच्युतानिति। देवयजनात् प्रच्युताविर्गतान् अप उदकान्यप्राप्तान् देवानेतस्मिन्नवकाशे मध्ये मार्गे रक्षांसि राक्षसान् अपघ्नन्पीडयन् तत्र स य: प्रसिद्धो रक्षोहा रक्षसां हन्ता अग्निरष्टपतीत्यस्या ऋचि गेयं या मपश्यत्ततस्तानि रक्षांसि एतेन साम्ना अग्निरपाहतावधीत्। तानि रक्षांसि असुर्हि संग्रामे अप हननानि सन्त्यभूवन्निन्द्रेवा अकुर्वन् अभिमन्यन्त इत्यर्थ:। इत्येवा एवै एतद्दिदानीमपि रक्षांसि अपसेधति तेन साम्ना हिनस्तीत्यर्थ:। तत्र स्तोमे किञ्चिद्विशेषमाह—तस्याहावोहाव इति। तस्य साम्न अहाव इत्येवं रूपं स्तोभं स्तोभति कुर्यादित्यर्थ:। अत-

एवैतदिदानीं अस्तावीमु अस्तावस्त्वित्येवं वाक्ये रक्षांसि अपसेधति निराकरोति। सामाश्रयस्य मन्त्रस्याद्यं पाद-मनूद्य व्याचष्टे—अग्निष्टपतीति अग्निष्टपतिद्युतं प्रकाशेन रक्षांस्य व तत् प्रतिदहति भस्मसात्करोति। प्रतिपादं स्तो-भानुत्पत्तिं दर्शयति- पादावेति। यथोक्तस्तोभाः पादाय पादाय प्रतिपाद मनुवर्त्तन्ते। रक्षसा मपहननायेति तत्रैव पादान्तर मनूद्य व्याचष्टे—विश्वमिति। विश्वं सर्वं भक्षिणं मांसादेरत्तारं राक्षसं सन्दह। दिङ्क्तिराहृत्ति-द्योतनार्थो इति यदा तेन अत्रिरेव रक्षांसि राक्षसानेत-द्रूपं पाप मेवापसेधति। यथोक्तसामनिधने त्रिराहृत्तिं दर्शयति—तस्य त्रिरिति। तस्य साम्नो यं निधन तच्चि-स्त्रिवारं मावर्त्तयेदित्याहुर्ब्रह्मवादिनः। उक्तां त्रिरावृत्तिं स्तौति—य वै सुहतमिति। इय निधनत्रिरावृत्ति रेव राक्षसं सुहतं हन्ति। वचनव्यत्ययः। अथ राक्षसः पुन-र्नोद्विक्त उत्तिष्ठेदित्यर्थः। यथाह यथा खलु सुष्ठु न हन्तव्य मुपद्रवकारिणं पुरुषं पुनः पुनरायुधमादाय किन्तु हन्यात्। एतत्त्रिविधेनोचारणेनापि तादृक्राक्षसहननायेत्यर्थः। तस्य साम्न अतिच्छन्दसि गानं दर्शयति—तदा इति। तदेतत् सामाति च्छन्दःसु भवति। बहुवचन मध्वर्युप्रेषभेदाय आहृत्यपेक्षया न तु स्वरूपेण एकत्वादृचः। यथोक्ताति च्छन्द प्रशंसति—वारणमिव वा इति। एतच्छन्दः वार-णमिव वै राक्षसानां निवारक मेव खलु यदेनातिच्छन्दा अयं मन्त्र अतएव रक्षसां वारणानीव निवारणीयान्य-वारण्यायतनानि अरण्यगृहाणि भवन्ति तस्माद्रक्षो-

गच्छ: ।"म्ब' स्वीय मरण "मतएव स्वारस्येन यथा निःक्रामं गच्छन् एतदतिच्छन्दोऽपि तादृशया रचसा' मरणप्रापकं कि तदतिच्छन्दः यस्मिन् तत् अवभृथ साम गायेदित्यवाह— तद्दै सप्ते ति। सप्तपदासु सप्तपदीपमैयाखल्लु एतत्साम भवति। बहुवचनं गानाद्यत्वपेक्षया। यथोक्तसंख्यां स्तौति—सप्त वै छन्दांसीति। चतुरुत्तराणि उत्तरोत्तराधिक्येनाचरचतुष्टयो-पेतानि गायत्र्यादीनि छन्दांसि सप्त वै सप्तैव। तत्तेन यथा लोकः सर्वे छन्दोभिरभयेन भयराहित्येनातिक्रामेत् सर्वदुरितम् एतदपि तादृशयोनिवारकप्रशंसापूर्वक मवभृ-थसाम्नः त्रिणीन दर्शयति—तस्य त्रिर्वचन इति। अग्नि-ष्टपत्यस्यां सप्तपदायां ऋचि साम त्रिराह त्रिर्गायेत। तस्य त्रिर्वचने सति पदानि पदा एकविंशतिः सामानि त्रीणि भवन्ति। तत्तथा सति चतुर्विंशति' संख्या सम्प-द्यते। अतः त्रिर्गान प्रशस्तमित्यर्थः। यथोक्तसंख्या मुप जीव्य पुनस्तात् संवत्सरात्मानं स्तौति—चतुर्विंशतिरिति। चतुर्विंशतिरर्द्धमासाः अतः सामापि चतुर्विंशतिसंख्या-साम्यात् संवत्सरः। संवत्सरसाम्य' साम्न उपपादयति तस्य ह वा इति। तस्यैतस्य संवत्सरात्मकस्य साम्नो हिं-ङ्कार एवाऽहोरात्राणि प्राथम्यसाम्यात्। आदिराद्या भक्तिरेव मासाः श्रेष्ठत्वसाम्यात्। उद्गीथ एव वसन्तादय' मुख्यत्वसाम्यात्। प्रतिहार भक्तिरेव पौर्णमास्यः प्रतिहार-साम्यात् उपद्रवाख्या भक्तिरेवाष्टका। निधनमेव साम्यात्। सप्तभक्तिपक्षे संवत्सरसाम्यमुपपाद्येदानीं पञ्चभक्तिपक्षे तत्साम्य मुपपादयति—तस्य वा एतस्येति। तस्यैतस्य संव-

सनत्रात्मकस्य साम्नो हिङ्कारादय एव वसन्ते तत्वाते-मन्तं प्रजा निधन ऋता इवासते निधनरूपमिवैतर्हि तस्मादेता एतं हैमन्तम् ऋतुः प्रजाः सार्वनिधनकृता नि-धनकारिण्य उपसंहृत्य व्यापार इवासते एतर्हि एवं सति निधनरूपामिव हैमन्तस्य रूप व्यापारोपरतिसाम्यादिति। एव दृचो वसवभयसाम्यं दर्शयित्वा इदानीं प्राच्यादिषु दिक्षु लौक नैष्ठिक विकल्पेन प्रश्नपूर्वक मवभयगमनं दर्शयितुं वृद्दानां प्रश्नं तावदुपशिक्षति—तदाहुरिति। तदाहुः क्रा-न्तिग्न अभि लक्ष्यावभ्रय मभ्यवेयु; ऋत्विजः प्रगच्छन्ति। तत्र प्रथमं कल्पं सप्ररोचनमाह—प्राञ्चोऽभ्यवेयुरिति। प्राञ्चः प्रागभिमुखाः सन्तोऽभ्यवेयुरव भ्रथार्थमेव प्रतिग-च्छेयुः। या एषा दिक् देवानां सम्बन्धिनी खलु। यद् यां प्राचो वा देषामान्दिक् प्राचीनोऽस्माकं यज्ञः क्रान्दिग्न मनुसन्तिष्ठादौ तिष्ठतेर्लिट्। एत ऐ इत्येकारः प्रतिष्ठते। भवत्विति प्राचीगमनमित्यर्थः। द्वितीयं कल्पं सप्ररोचनं दर्शयति—दक्षिणाभ्यवेयुरिति। दक्षिणा दक्षिणतोऽभ्यवेयुः अतएव एव यजमान. मापानं मे घ्नन्ति यो जनः ते तमिमं मापानं हतं निःपापं यजमान दक्षिणाया पितॄणां दिक्ता-येनु यज्ञः सन्तिष्ठाता इतीति दक्षिणाद्वाराणि नयानीति प्रस्तोता ब्रवीति सा एषा दिक् पितॄणां सम्बन्धिनी खलु या दक्षिणा। तृतीयं कल्पं प्ररोचन दर्शयति—प्रत्यञ्चोऽभ्य-वेयुरिति। तथा च श्रुत्यन्तरं देव पितर मनुष्या दिशो व्यभजन्तं प्राचीं देवाः दक्षिणां पितरः प्रतीचीं मनुष्या इति श्रुष्टमन्यत्। कल्पान्तरसप्ररोचनमाह—उदञ्चोऽभ्य-

वेयुरिति। उदङ्मुखाः अवभृथमभ्यवेयुरेषा दिग् नक्षत्राणां
संमूला या दिशि नक्षत्राधिपतिः सोमस्तासामभिरेव स्पष्ट
मभवत्। यथोक्तानां दिशां मध्ये यस्यां दिशि भूयिष्ठा आपो
भवन्ति तत्र गच्छेयुरिति। नियमं दर्शयति—यतोवा-
वेति। यतो वाव यतमथा कतमथा यस्यां कस्यां दिशि वक्ष्णा
दिशां प्रकृतत्वान्निर्धारणे डतमच्। आपो भूयिष्ठा स्यु-
स्तत्राभ्यवेयुर्गच्छेयुस्तत्र प्राच्यां दिशि दिङ्नियम इत्यर्थः।
यथोक्तार्थविदं प्रशंसति—य एवं विद्वानिति। अस्मात्क-
र्मणः इदं श्रेयो भवतीति विद्वान् जानानः कर्म करोति
तेन तेन कर्मणा वसीयानतिशयेन वसुमानेव भवति।
नद्यां तडागादिषु वावभृथगमनमिति विचारपूर्वकं व्यव-
स्थितविकल्पं दर्शयितुं विचारं तावदाह—तदाहुरिति।
तदाहुर्ब्रह्मवादिनः स्रवन्तीषु चलास्वप्सु अभ्यवेयुः अवभृ-
थार्थं गच्छेयुः स्थावरासु अचलास्वप्सु वेति। श्रुतौ
विचारार्थौ तत्राद्य पक्षं प्रशंसितुं दर्शयति—स्रवन्ती-
ष्विति। हतपाप्मनः प्रतिहतं यक्षं प्रवयन्तीति। स्रव-
न्तीषु गामगमित्यर्थः। सप्रशंसं पक्षान्तरमाह याः स्थाव-
रास्विति। याः स्थावराः या अचलाः शैवल्यः शैवाल-
युक्ता आपः सन्ति ता अभ्यवेयुरवभृथार्थमितोऽस्माल्लो-
ऽग्नो यज्ञाविस्रब्धः सन् प्रत्युपतिष्ठते आगच्छति। शैवाल्या-
स्वप्सु गमनमित्यर्थः। असञ्चयासञ्चयाभ्यां विकल्पो व्यव-
स्थितो द्रष्टव्यः। नदीतटाकयोर्मध्ये यत्रापो भूयिष्ठा-
स्तत्र गच्छेयुरिति नियममाह—यतो वा स इति। अथो
अपि च यतरथा कतरथा चेव यत्र कुत्रचिदुभयस्य पूर्व-

सुपन्यस्तत्वात् द्वयोरेकस्य निर्द्धारणेऽपरत्र आपो भूयिष्ठा-
स्सु स्तुतैवाभ्यवेयु । उक्तार्थविद् प्रशंसति—य एवं विद्वा-
निति । व्याख्याततरमेतत् ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
बृजुब्राह्मणाख्ये द्वितीयब्राह्मणे तृतीयप्रपाठके
प्रथम खण्डः ।

---

अथाभिचरणीयक्रिषु एकस्मै हिङ्करोतीत्याद्यः पञ्चानुवाकाः
त्रिवृदादीनां त्रिणवपर्यन्तानां विष्टुतिचोदना तत्र त्रिवृत
स्तोमेषु सप्तके द्वे विष्टुती स्त इति तद्विधायकं ब्राह्मणमेव
माम्नायते एकस्मै हिङ्करोति स प्रथमयुद्गाता एकस्मै एका
मृचद्गातु हिङ्कारं कुर्यात् । क्रियार्थोपपदस्य कर्मणीति स
र्वत्र चतुर्थी । स हिङ्कर्त्ता प्रथमया ऋचा गायेदिति शेषः ।
तृतीयया पञ्चततस्तोभ्यस्तिस्र ऋचो गातु हिङ्करोति समध्य
मया ऋचा । कृत्वो गायेदित्येका विष्टुति । अतएवैकस्मै
हिङ्करोति स प्रथमयेति पूर्ववद् व्याख्येयम् । तिसृभ्यो हिङ्क
रोति स पञ्चभिस्तिसृभि र्ऋ मिरानुलोम्येन गायेदित्यर्थ
पञ्चभ्यो हिङ्कुर्यात् स प्रथममेकया गायेत्तत स एकया द्विती
यया गायेत्त हिङ्कर्त्ता उद्गाता तिसृभिस्तृतीयया ऋचा त्रि
र्गायेदिति एवं त्रिवृत इमु सप्तका विष्टुतिरिति द्विवि
धेत्यर्थः । अनया कर्त्तव्यता दर्शयति—अभिचरन्निति ।
एतया द्विविधया विष्टुत्याभिचारं कर्म्म कुर्वाण स्तुवीते
त्यर्थः । अस्या विष्टुतेरपि साम्यं दर्शयति—अनीक प्रथ

शैषिति। उभयतः पर्याया प्रथमा ऋगिति अनीक मि-
षुधारास्थानीया मध्यमे पर्याये यतो यास्तिस्रोगीति-
विधया ऋचः सन्दधाति। ता इषुस्तदा सनं ज्या मौर्वि
चेति। तिस्र एतत्स्थानीय इत्यर्थः। एताभिः शरं शरा-
सनं ज्या दधाति खलु पञ्चभिरेभिरुक्तैः अपमन्त आभा
सत्याभिर्विसृजते धनुःष्, संहिताम् इष, मलक्ष्यदेशं प्रति-
विसृजतो अयनोकादिवि सर्वनाम्नाः पञ्च संख्याः शरेऽपि
वर्त्तन्त इति तत् साम्यं द्विविधाया विष्टुतेर्युक्तमित्यर्थः।
तत् प्रशंसति—स्तृणुते भ्रातृव्यमिति। य एतया विष्टुत्या
स्तुते भ्रातृव्यं 'सपत्नं' स्तृणुते हिनस्ति 'तृहि' हिंसाया-
मिति धातुरात्मना स्वेनैव अन्यो निरपेक्षणपक्षीयामनिय-
त्येन वसुमान् भवतीति। २॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे,
षड्विंशब्राह्मणभाष्ये द्वितीयमाह्ने तृतीयप्रपाठके
द्वितीयः खण्डः।

---

अथ तृतीयखण्डः।

पञ्चदशस्तोमस्य विष्टुतिविधायकं ब्राह्मणमेव माम्ना-
यते—तिसृभ्यो हिङ्करोतीति। अदावुभौ पर्यायौ परा-
चीभिः आनुलोम्येन पराचीभिः ऋग्भिः कार्यौ तृतीयः
पर्यायः एकैकस्या ऋचः त्रिरावृत्त्या कार्य्य इत्यर्थः।
पञ्चदशस्य विष्टुतिरिति। अथ कार्य्यत्वं दर्शयति—अ-
भिवर्त्तेति। उक्तं पञ्चदशं स्तौति—वज्रो वै इति।

वज्रो वै वज्र एव त्रिवृत् स्तोमः त्रिणवस्तोमोऽपि वज्रः तस्य वज्रस्य त्रिवृदेव त्रिणव एव वज्रस्य वज्रत्वं त्रिवृत् स्वभावात्। एतावता किं कृतमित्युक्तम्। यदेवं त्रिवृत्रि-णवाभ्यां स्तोमाभ्यां पञ्चदशस्तोमं विदधाति—तिसृभि-स्त्रिवृतो विधानं न नवभिस्त्रिण वयेति तत्तेन वज्रं वै सम्यक् समीचीन सन्दधाति। अवयविनं वज्रं वज्रावयवै सन्दधातीत्यर्थः। वज्रस्य त्रिवृत्त्रिणवसादृश्यं दर्शयति—एव-मिव वै इति। एवमेव खलु वज्रः साधुः शत्रूणां साधको भवति प्रहरणतः प्रहरणत. प्रदेशेऽग्न्ये व यस्मादयं वज्र-स्तारभणतः ग्रहणप्रदेशे अणीयान् अणुतरो भवति स्थवी-यान् स्थूलतरो भवति अत्रापि प्रथमसख्यानसंख्यापेक्षया अन्या नवसख्या अधिका। अन्यसंख्याया अनभिहितत्वात्। तत् प्रशंसति—तेन पाप्मानमिति। यतो वा तेन पाप्मान भ्रातृव्यं स्तृणुते हिनस्तीति। शिष्ट स्पष्टम्॥ ३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थे
प्रकाशे षड्विंशब्राह्मणाख्ये द्वितीयब्राह्मणे
तृतीयप्रपाठके तृतीय. खण्डः।

---

अथ चतुर्थ. खण्डः।

सप्तदशस्तोमस्य विष्टुत्याः कर्त्तव्यतां दर्शयति—एत येवाभिचरन् स्तुवीतेति। एतया वक्ष्यमाणया विष्टुत्याभि-चरन्-शत्रुजिघांसु. स्तुवीत सप्तदश स्तौति—वज्रो वै त्रिवृ-दिति वज्रः पञ्चदशो वज्रस्त्रिणवो यस्त्रिवृत्पञ्चदश त्रिणवैः

सप्तदशं विदधाति—वज्रस्य बलत्वं सुप्रसिद्धं वज्रः पञ्च-दशः एतस्यैव तथात्वात्। वज्रस्त्रिपर्वं यथास्मात्त्रिवृदा-दिभिः सप्तदशं विदधाति। तिसृभिस्त्रिवृतो विधानं पञ्चभिः पञ्चदशस्य नवभिस्त्रिणवस्य। एतदुक्तं भवति— तिसृभिः पराचीभिः प्रथमः पर्य्यायः पञ्चभिर्मध्यमः नवभिरुत्तम इति। तत्तेन वज्रमेव वज्रावयवे सम्यक् सन्दधातीति ऋग्भिराद्यं पर्यायं गायेदिति शेषः। उत्तरौ एकस्या ऋचस्त्रिरावृत्त्या कार्यावित्यर्थः। अभिचरन् स्तुवीत। अनया विष्टुत्या अभिचरन् पुरुषः स्तुवीतेति शेषः। उक्त मेकविंशं स्तौति—वज्रो वै इति। यथैव त्रिवृत्त्रिणवाभ्यां स्तोमाभ्यां एकविंशं विदधाति तिसृभिः त्रिवृतो विधानं नवभिस्त्रिणवस्येति। वज्रस्य त्रिवृदादि सादृश्यं प्रशंसनञ्च करोति—एवमिवेति। एतया एकविंशस्तोम मिष्टुत्या स्तुवे। शेषं व्याख्यातचरम्॥ ४॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे षड्-
विंशब्राह्मणाख्ये द्वितीयब्राह्मणे तृतीयप्रपाठके
चतुर्थः खण्डः॥ ४॥

---

॥ अथ पञ्चमः खण्डः॥

अथ त्रिणवस्तोमस्य विष्टुतिविधायकं ब्राह्मण मेवाम्नायते। नवभ्यो हिङ्करोतीति। उद्गाता नवभ्यो नवर्चेभ्यो हिङ्कुर्यात् स हिङ्कृत्य त्रीनपि पर्य्यायानेकैकस्या ऋचस्त्रिरा-वृत्त्या तिसृभि र्ऋग्भिः कुर्य्यादित्यर्थः। अभिचरन् स्तुवी-

तेति । अनया त्रिणव स्तोमविष्टुत्या अभिचरन् मुवीतेति शेषः । उक्तात्रिणव वज्रस्य सादृश्येन प्रशंसति—वज्रो वै त्रिणव इति । त्रिणव एव वज्र. तिसृभिस्त्रिणवत्वात् । त्रिहतो वज्र एव प्रसिद्धः तत्तस्माद् वज्र एव परागम्य न प्रवर्त्तयति । यः पुमानेतया त्रिणवस्तोमविष्टुत्या स्तुते स आत्मनैव वसीयान् वसुमत्तमो भवतीति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षड्विंशब्राह्मणे द्वितीयब्राह्मणे तृतीयप्रपाठके पञ्चमः खण्डः ।

## इति तृतीय प्रपाठकः ।

—०—

## अथ चतुर्थः प्रपाठकः ।

प्रथम खण्ड ।

चतुर्थाध्यायस्य प्रथमानुवाके पञ्चविंशब्राह्मणोक्तद्वादशाहादिक्रतस्य व्यूढद्वादशाहस्य धर्मा निरूप्यन्ते । तत्र प्रथम मायन्तयो. प्रायणीयोदयनीययोरह्नोः सर्वयज्ञस्य साधारणत्वादवशिष्टाना मह्नां मध्ये दशमस्याप्यविक्रियात्तत्रापि न किञ्चिदवक्तव्यमस्तीत्य वशिष्टस्य नवरात्रस्य धर्मभेदा अनुवर्ण्यन्ते । तत्र प्रथमत्रिरात्रस्य धर्मविशेषमाह—स्वरान्तः प्रथम इति । प्रथमस्त्रिरात्रः स्वरान्तः स्वरित मकार मन्तो यस्य स तथोक्त' त्रिरात्रसम्बन्धी य. पवमान' स्वरान्त इति भाव । तथा च पञ्चविंशब्राह्मणे पवमानसामविधानानन्तरमाम्नायते स्वरसुर्प्येनेति तथा

छन्दो गायत्री प्राणो वै गायत्रीति तत्र छन्दो गायत्री प्राण एवा प्राणापानव्यानैः त्रिवृत् प्राणः गायत्र्यपि त्रिपादिति अतो गायत्र्याः प्राणसाम्यम् अथवा मुखे प्राणः गायत्र्यपि मुखादुत्पन्नेति प्राणसाम्यं द्रष्टव्यं तस्मात्तेन छन्दसा यजमानः सर्वमायुरेतीति शेषः स्वरः प्रजापते रेव तयो स्तादात्म्यं शास्त्रसिद्ध मेवं तेन स्वरेण देहान्ते यजमानः प्रजापति मेवाप्नोति। द्वितीयं त्रिरात्रधर्मं माह— निधनान्त इति। द्वितीयं त्रिरात्रो निधनान्तो निधनमन्ते यस्य स तथोक्तः द्वितीयपवमानो निधनान्त इत्यर्थः। तथोक्त षड्विंशब्राह्मणे निधनान्ताः पवमाना भवन्तीति। तथा त्रिष्टुप् जगतीच्छन्दो व्यूहेन त्रिष्टुपमासुखम्। तदुभयं प्रशंसति—वीर्य्यं वै त्रिष्टुबिति। त्रिष्टुप् वीर्य्यमेव इन्द्रेण सहोत्पन्नत्वात् पुरुषः चतुष्पाङ्गो वीर्य्यवान् निधनं निधानं तदाश्रितः तेनाश्रयाश्रयिसम्बन्धेन पुरुषशब्देन निधनं लक्षते तथाच निधनं त्रैष्टुभमित्यर्थः। तेन यजमान पुरुषं पुत्रपौत्रादिकं माप्नोति। तृतीयं त्रिरात्रधर्म्ममाह—इडान्त इति। तृतीयस्त्रिरात्रः इडान्तः इडा अन्तो यस्य स तथोक्तः तदीयाः पवमाना इडान्ता इत्यर्थः। तथाचोक्तं षड्विंशब्राह्मणे इडान्ताः पवमाना भवन्तीति जगती तृतीयं छन्दो व्यूहेन जगतीमसुखमित्यर्थः। तदुभयं प्रशंसति—पशवो वा इति अतिरोहितार्थमेतत्। ननु यदि गायत्र: प्रथमस्त्रिरात्रस्तर्हि प्रथमे विनियुक्ता एव गायत्र्या द्वितीय तृतीययो रह्नोः प्रयोगाच्च तस्य यातयामत्वमभवेत् इति मत आह—प्रस्तसच्छन्दा इति। सत्यं

तथापि प्रथमस्त्रिरात्रः प्रवृत्तच्छन्दाः प्रथम. हतानि विस्तीर्णानि गायत्र्यादीनि छन्दांसि यस्मिन्निति तथोक्तः। प्रातःसवनस्य गायत्रत्वान्माध्यन्दिनसवनस्य त्रैष्टुभत्वात्तृतीयसवनस्य जागतत्वात्तेनैव छन्दोभेदेन सोऽयं त्रिरात्रः आयातयामा गतसारो भवतीत्यर्थः। अथ द्वितीय त्रिरात्रस्य छन्दोविभागेन यातयामत्वं दर्शयति—अथोत्तरस्येति। अथशब्दोवाक्योपक्रमे उत्तमस्य द्वितीयत्रिरात्रस्य छन्दांसि व्यूहन्ति व्यूहेन भिन्नानि कार्य्याणि तदेव विवरणं जगतीच्छन्दस्का: ऋचः प्रतिपद्यन्ते प्रारभ्यते आभिर्ऋग्भिः प्रतिपदा या भवन्ति तत्र वहिष्पवमानानामाज्यानां तरुतानाञ्च गायत्री गायत्राणां स्थाने जगत्यो भवन्ति जगतीनां स्थाने त्रिष्टुभो भवन्ति त्रिष्टुभां स्थाने गायत्र्यो भवन्ति तेनैव छन्दोव्यूहेन साम्यमयातयामा। अथ तृतीयत्रिरात्रस्यापि छन्दोव्यूहत्वेनायातयामत्वं दर्शयति—अथोत्तमस्येति। अथ उत्तमस्य तृतीय त्रिरात्रस्य छन्दांसि व्यूहन्त्येव कथम्। तत्र वहिष्पवमानान्येषु त्रिष्टुभः प्रतिपदो भवन्ति। त्रिष्टुभां स्थाने जगत्यो भवन्ति तेनैव च सोऽयं तृतीयस्त्रिरात्रोऽयातयामा भवेदिति। यथोक्तमर्थं स्तौति—अभिचारत इति। एता विच्छिन्नच्छन्दस्का ऋचः। अन्योन्यस्मै लोकं व्यूहेन परस्परस्थानमभ्यायन् अधितिष्ठन्त्येव एता विभक्तिपरिणामः एताभिः परस्परलोकं प्राप्ताभिर्ऋग्भिः काम समीष्ट मेव यजमानो गमयति गच्छति। एतस्यैव विवरण यस्मै कामायैव आर्भ्यत इति। यस्मै कामायेव कामं प्राप्तुमेव द्वादशाह.

व्याह्रियते। अनुष्ठीयते न कामं माप्नोति। अथ प्रथमत्रि-
रात्रस्य प्रवृत्तछन्दस्त्वं स्तौति—तस्मायुजौ इति। यतो
प्रथमस्य रथस्य वाहनस्थानीयानि गायत्र्यादीनि
छन्दांसि वैषम्येण भवन्ति। तस्मायुजो विषमवलौ गजाविकत्र
युक्तौ सन्तौ सदृक्समानं न वहत इत्यनेन प्रथमेऽत्र द्वे नव-
रात्रस्य यत्र वहन द्वारा प्रथमं छन्दस्तुतं भवति। तस्मा-
च्छन्दांस्यन्योन्यस्य स्थानप्राप्तान्येव यत्रहारोपि वहन्ति।
तत्रस्मार्त्तीके विपरीतौ कालभेदेऽन्योन्यस्थानं प्राप्तौ पूर्वाह्णे
दक्षिणतो युक्तमनड्वाहं विमुच्य मध्याह्ने तत्स्थाने उत्तर-
तोऽवस्थिते युक्ते स्थानेऽपि दक्षिणत स्थिते युक्ते सति उभा-
वपि वहां सौबोढृतरौ भवत इत्यनेनोत्तरयोस्त्रिरात्रयोश्छ-
न्दसां व्यूहन भवति। यस्मात्त्रिरात्रस्य छन्दांसि विलक्षण-
स्थानावस्थितानि तस्मादेव उभयोरन्तोऽश्वादय उह्यन्ते
एकतोदन्तो गवादिभ्योऽधिकं गच्छतीत्यनेनोत्तरयोस्त्रिरात्र-
योश्छन्दसां व्यूहन भवति। यस्मात्त्रिरात्रस्य ऋक्छन्दसो
स्थानवैषम्यं श्रुत भवतीति वाक्ये त्रयस्याप्यर्थवत्ता। इदानीं
प्रकृतिभूते द्वादशाहे परितोपिध्वसाश्रुतम् अभिसोमास
आयव इति साध्यासयोः प्रगाथयोः प्रगाथाथे प्रग्रथनेन त्रिष्टु
वेक साम गीयते। अध्यदध्यासायां द्विपदायाम। अत्र द्वाद-
शाहे विकृतभूतेन तथा अध्यायाम युक्त चतुर्कर्षे साकमेव
साम गेयमिति दर्शयितुमाह—हचे वा इति। वसिष्ठादन्ये
ऋषय। टचे ककुप्सरापदत्वया अतोने प्रगाथे विराजं
तत्राद्या बृहती चतुष्पदा उत्तरे ऋचौ प्रत्येकं त्रिपदे इत्य
नेन प्रकारेण पादाग्रतो दशसङ्ख्या समपश्यन्। इमावत्रा

सादृश्येन तस्य साध्यः गोदोहनेन वा चमसस्य। अथवा श्येनविशिष्टं कर्मान्तरम् अत्र विधीयते श्येनयता यजते लक्षणाया असिद्धार्थकल्पनातो मत्वर्थलक्षणापि यसी। यद्यपि यथा श्येन आददीतेत्यादिवाक्यशेषप्रतिपन्न सादृश्येन कर्मणि गौणी वृत्तिः श्येनशब्दः सम्भवति तथापि तस्याऽत्यन्तविप्रकृष्टार्थत्वात् स्वार्थपरित्यागे श्रुतिहेतुकाश्च मत्वर्थलक्षणैव युक्ता। अतः सोमेन यजेतेति सत्यपि मत्वर्थत्वे गत्यभावाद्विशिष्टविधिरेवेति तदनुपपन्नम्। गुणस्याप्रधानपरत्वे एव गुणो विधीयते स एव स्तोतव्य इति श्येन समाख्यैव स्तुतिः स्यात् न चात्र यथा श्येन आददीतेत्यादि वाक्यशेषे तस्य स्तुतिः स्वेनैव स्वस्योपमानेन स्तुतेरयुक्तत्वादेतैः व्यपदेशात्मकस्य नामधेयस्यैतदर्थपरिहाराय विप्रकृष्टार्थतयापि गौण्या वृत्त्या श्येनशब्दः कर्मणि वर्त्तते। अतः सति सम्भवे गौरवात् सोमादिवद्विशिष्टविध्यङ्गीकरणमयुक्तमित्यलमतिप्रसङ्गेन। अतः श्येननामधेयेन यागेन शत्रुहिंसां भावयेदित्ययमेवार्थः। श्येनशब्दस्य यागे प्रवृत्तिनिमित्तं दर्शयितुं स प्रसिद्धं श्येनसादृश्येन याग स्तौति—श्येनो वै इति। वयसां पक्षिणां मध्ये श्येनाख्यः पक्षी क्षेपिष्ठः क्षिप्रतमः क्षिप्रं श्येनो निपत्य पक्ष्यन्तराणि हन्तुमाददीत स्वीकरोति एवमेवाभिचरन् एनं भ्रातृव्यमेतेन यागेनादत्ते। यद्यपि आदाने मरणकरणता प्रतीयते। तथापि तदादानस्य हिंसार्थत्वाद्भ्रातृव्यहिंसाकरणतैवात्र विधेया। ततः पवमानेषु प्राप्त सति त्रिवृत् स्तोम विधीयते —त्रिवृद् वै स्तोमानामिति। यदस्मात् स्तोमाना मध्ये

